त्संभाव्यमानमप्याश्रयाश्रयिभावं परित्यज्य, असंभाव्यमानावच्छेद्यावच्छेद-कत्वोपपादन, तदतिविचित्रम्। अत्र नभश्शब्दयोरिव जीवाऽविद्ययोरा-श्रयाश्रयिभावोऽङ्गीकर्तव्य इतीमामाशङ्कामुपपादयता भवता तयोरन्यो-न्यताद्धीन्योपपादनाय, "यदाऽविद्या, तदा जीवभावः, यदाऽविद्याभावः तदा जीवभावाभावः" इत्युच्यमानमतीवोपहास्यम्। एवमुक्त्या जीवस्याविद्याधीनत्वमेवोपपादितं भवेत्। नाविद्यायाः जीवाधीनत्वम्। नहि "वह्नौ धूमः, वह्न्यभावे धूमाभावः" इत्युक्ते धूमस्य वह्न्यधीनतेव वह्नेर्धूमाधीनताप्युक्ता भवेत्। अतोऽन्योन्यताद्धीन्योपपादनमिदं न भवतीति स्फुटम्। किञ्च (५४-पु)भवतैव स्थितावन्योन्याश्रयाभावोप-पादनावसरे जीवस्याज्ञानाधीनस्थितिकत्वस्य निरस्तत्वात् पुनरत्र यदाविद्या तदा जीवभाव इति जीवस्याज्ञानाधीनस्थितिकत्वशंकोत्था-पनमेवासंबद्धम्। अपिचात्र प्रकरणे (अज्ञानस्य)जीवाश्रितत्वोपपत्तिरिति शीर्षकं दत्वाऽनुपदमेव "आश्रयाश्रयिभावो नाङ्गीक्रियते" इति तन्निराकरणं मृषावादिनां भवतामेव शोभावहम्। अज्ञान जीवाश्रित-मित्ययं पक्षोऽज्ञानमूलो दत्तजलाञ्जलिरेव भवेत्। वृक्षकपिसंयोगदृष्टान्तेन जीवाविद्ययोर्भवताऽभ्युपगम्यमानोऽवच्छेद्यावच्छेदकभावः कथमिति विमृ-शामः। वृक्षेऽग्रे कपिसंयोग इति प्रतीत्या वृक्षाश्रितकपिसंयोगस्या-वच्छेदकमग्रमित्यङ्गीक्रियते। तथाच कपिसंयोगोऽवच्छेद्यः। वृक्षा-वयवभूतमग्रमवच्छेदकमिति सर्वसंप्रतिपन्नम्। नत्वत्र वैपरीत्येन, कपिसंयोगः अवच्छेदकः, अग्रमवच्छेद्यमिति कोपि विवेकी प्रत्येति। तथाच भवदुपात्तकपिसंयोगदृष्टान्तस्थले परस्परमवच्छेद्यावच्छेदकभावो नास्तीति सिद्धम्। तथासति तेन दृष्टान्तेन प्रकृते जीवाविद्ययोः परस्परावच्छेद्यावच्छेदकभावसाधनमसाधनमेवेति फलितम्। "वृक्षा-श्रितकपिसंयोगे"त्यारभ्यात्र भवद्भिर्वाक्यत्रय प्रयुक्तम्। तत्र प्रथमवाक्येन कपिसंयोगावच्छेदकत्वमग्रस्येवाविद्यावच्छेदकत्व जीवत्वस्येत्युक्तम्। "जीवो

ह्यविद्ययाऽवच्छिद्यते" इति मध्यमं तु वाक्यं हिशब्दघटितं कस्य वाक्यस्य अर्थोपपादकमिति भवदभिमतम्?। न पूर्ववाक्यस्य, तथासति अहो भवता वाक्यरचनाचातुरी, अर्थोपपादनप्रकारश्च। जीवत्वस्यावच्छेदकत्वं हि पूर्ववाक्योक्तम्। तस्येदं जीवत्वस्यावच्छेद्यत्वप्रतिपादकं मध्यमं वाक्यं कथमिवोपपादकं भवेत्। "अवच्छेदकाविद्या चे"त्यादितृतीयवाक्ये अविद्यामवच्छेदकत्वेनानुवदितुमिदं मध्यमं वाक्यमित्यपि वक्तुं न शक्यते। उक्तार्थस्य हि उपपादकेन मध्यमवाक्येन भाव्यम्। अन्यथा हिशब्दानन्वयात्। कुत्र वा केन वा दृष्टान्तेन जीवत्वमवच्छेद्यमविद्याऽवच्छेदिकेति साधितम्?। तृतीयवाक्यं च प्रथमवाक्यसमानार्थमेव। इत्थं चानेन कपिसंयोगदृष्टान्तेन परस्परावच्छेद्यावच्छेदकभावो दुस्साध इति सिद्धम्। किञ्च—वृक्षाग्र पूर्वसिद्धं कपिसंयोगस्यावच्छेदकीभवितुमर्हति। प्रकृते तु जीवत्वस्य ब्रह्माभिन्नत्वेन काल्पनिकत्वात्, कल्पनायाश्चाविद्यासंबन्धाधीनत्वेन पूर्वसिद्धत्वाभावात् किमाश्रित्याविद्या जीवत्वादिक कल्पयतीत्यस्यैव प्रकृतविवादविषयत्वात् आश्रयदौस्थ्येनाविद्याकल्पनाया एवासिद्ध्या जीवत्वस्यैवाप्रसिद्ध्या कथ तस्य जीवत्वस्याविद्यावच्छेदकत्व घटेत?। अनादित्वकथा च कथाशेषं प्रापिता पूर्वमेव काल्पनिकत्वविरोधादिना। एवमविद्याया अपि जीवभावावच्छेदकत्वं दुर्वचमेव। किमाश्रित्यावच्छेदिका भवतीत्यस्यैव दुर्निरूपत्वात्। शुद्धचैतन्याश्रिता सतीत्युक्ते, हन्त जीवाश्रितत्वपक्षः परित्यक्तः स्यात्। जीवाश्रितेत्यपि न, जीवभावासिद्धेरेव। तथाच जीवाविद्ययोस्सर्वथा परस्परावच्छेद्यावच्छेदकभावो दुरुपपाद एवेति निरूपितम्॥

यदप्यत्रैव (५५-पु)जीवाविद्ययोरवच्छेद्यावच्छेदकभावोप्यन्योन्याश्रयदोषदुष्ट एवेत्याशंकापरिहाराय प्रमाणप्रमेयदृष्टान्तीकरणम्—तदपि न साधीयः। इद प्रमेयमिति प्रमेयत्वाकारावगाहिप्रमाण स्वनिरूपक-

प्रमेयावच्छेद्यम्। प्रमेयं च स्वविशेषणीभूतप्रमाणावच्छेदकमित्येवमवच्छेद्या-वच्छेदकत्वस्य प्रमाणप्रमेययोस्सत्त्वेपीतरेतराधीनत्वदोषानभ्युपगमात्" इतीद भवदीयं वाक्यं कथं वा प्रमाणप्रमेययोरवच्छेद्यावच्छेदकभावं, ततोऽन्योन्याधीनत्वदोषाभावं वोपपादयतीति न विद्मः। अत्र च वाक्ये प्रमेयस्यावच्छेदकत्वं प्रमाणस्यावच्छेद्यत्वं चेत्येतावदेवोक्तमस्ति, नतु परस्परावच्छेद्यावच्छेदकत्वम्। एवं सति कथमन्योन्याधीनताप्रसक्तिः, तद्दोषताप्रसङ्गो वा। किञ्चात्र प्रमाणपदेन प्रमितिकरण वा प्रमितिरूपं वा विवक्ष्यते?। नाद्यः—मानाधीना मेयसिद्धिरित्युक्तरित्या प्रमेयस्य प्रमाणाधीनत्वेपि मेयाधीना मानसिद्धिरित्यसंभवात् परस्परतादधीन्यस्यैवा-संभवात्। तत्राधीनत्वं किंरूपम्, सिद्धिश्च केत्यपि विचार्यम्। नान्त्यः— परस्परनिरपेक्षयोर्विषयविषयिणोराधाराधेययोर्वा विषयविषयि-भावाधाराधेयभावादौ परस्परनिरूप्यनिरूपकभावावच्छेद्यावच्छेदकभावादे-रभ्युपगमेपि प्रकृते जीवत्वाज्ञानयोर्मिथ्याभूतयोस्स्वरूपसिद्धावेव परस्पर-सापेक्षत्वावश्यंभावेनान्योन्याश्रयदोषानिरासात्। नह्यज्ञानं विना जीवत्वं सिद्ध्यति। नापि जीवत्व विनाऽऽश्रयासिद्ध्याऽज्ञानस्वरूपं सिद्ध्यति। किञ्च—इदं प्रमेयमित्यत्र इदमर्थविशेष्यकप्रमेयत्वप्रकारकं ज्ञानमित्ये-वास्थेयम्। अत्र "प्रमेयं च स्वविशेषणीभूतप्रमाणे"त्युक्तं कथं घटते?। प्रमेयस्य कथं तत्र प्रमितिकरणरूपप्रमाणविशेषणकतेति न जानीमः॥

इदमत्रावधेयम्। 'भूतले घटः' इत्यादौ आधारताधेयतयोः परस्परनिरूप्यनिरूपकभावांगीकारेण परस्परसापेक्षत्वेपि नाधाराधेयस्वरूपयोः भूतलघटयोः परस्परसापेक्षत्वमस्ति। तथा घटतज्ज्ञानयोर्विषयविषयिणोरपि विषयविषयिभावयोः परस्परसापेक्षत्वेपि न स्वरूपयोः परस्परसापेक्षत्वमस्ति। "अर्थेनैव विशेषो हि निराकारतया धियां" इत्युक्तरीत्या घटादेर्विषय-विधया ज्ञानसामग्र्यन्तर्भूतत्वेन ज्ञानस्य घटसापेक्षत्वेपि च घटस्वरूपस्य

ज्ञानसापेक्षत्वाभावेन न परस्पराश्रयः। प्रकृते तु पूर्वोक्तरीत्या जीवत्वाज्ञानयोस्स्वरूपसद्भाव एव परस्परसापेक्षत्वेन दृष्टान्तवैषम्यात् प्रमाणप्रमेयदृष्टान्तेनाप्यन्योन्याश्रयदोषो दुरुद्धर एवेति॥

यदपि चात्रैव (५५-पु) "एतेन तदुभयाध्यासाधिष्ठानभावप्रसङ्गदोषः परास्तः। ब्रह्मण एव जीवेश्वराविद्यादिसकलप्रपञ्चाधिष्ठानत्वसंप्रतिपत्तेः" इत्युक्तम्। तदपि व्याघातादिदोषदुष्टतया परास्तम्। शुद्धे ब्रह्मणि जीवभावाविद्याध्यासाधिष्ठानत्वं कुत्र संप्रतिपन्नम्?। अध्यासस्य दोषमूलत्वेन एतदुभयाध्यासो दोषान्तरमूल इति वक्तव्यम्। किं तद्दोषान्तरम्?। नन्वनादित्वेन तयोरभ्युपगमात् न तदुभयाध्यासे दोषान्तरापेक्षेति चेत्-न, तेनैव न्यायेन प्रपञ्चाध्यासस्यापि संभवात् अविद्याकल्पनावैयर्थ्यापातात्। अनादित्वे काल्पनिकत्वमसंभवीत्यादिकं च पुरस्ताद्विस्तृतम्। ततश्च शुद्धचैतन्यस्याध्यासाधिष्ठानत्वासंभवात् उपहितस्य तस्योक्तरीत्याऽन्योन्याश्रयादिप्रसङ्गेन तदनुपपत्त्या जीवभावाऽविद्ययोरध्यासाधिष्ठानाभावप्रसङ्गो दुष्परिहर एवेति सिद्धम्।

यदत्र कल्पतरूक्तोदाहरणम्—

"अधिष्ठानं विवर्तानामाश्रयो ब्रह्म शुक्तिवत्।
जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम्॥" इति—

"जीवस्थाया अविद्याया विषयं ब्रह्म शुक्तिवत्।
ऊचे वाचस्पतिर्भाष्यश्रुत्योर्हृदयवेदिता॥" इति च, तदेव प्रत्युक्तम्-

"अविद्यादिप्रपञ्चस्याध्यासाधिष्ठानता नहि।
घटेत निर्विशेषस्य कल्पकं हि न विद्यते॥
अन्यथाऽज्ञानवैयर्थ्यं तद्विना तद्भ्रमोदयात्।
अज्ञानविषयत्वादि न शुक्तिविषयेऽत्र च॥" इति॥

यदपि चात्रैव (५५-५६-पु)"पूर्ववादिनापि आत्माश्रयान्योन्याश्रयादिदोषाणा क्वचित्क्वचिददोषत्वमवश्यमङ्गीकार्यमेवे"त्युक्त्वा, तत्रात्माश्रयस्यादोषत्वे प्रमेयत्वनिष्ठकेवलान्वयिप्रमेयत्वमुदाहृत्य, अन्योन्याश्रयस्यादोषत्वे व्यक्तिभेद एव कारणमिति चोक्त्वा, "एवं जीवस्याज्ञानाश्रयत्वपक्षेपि अन्योन्याश्रयादिदोषाणामदुष्टत्वे सति कुतः पूर्वपक्षिणा कुतर्कावसरः। अभ्युपेत्य तेषां दुष्टत्वं पूर्वं परिहारोऽभिहितः।" इत्युक्तम्। तदपि विद्वदुपहास्यमेव। अन्योन्याश्रयादिदोषाणां क्वचिददोषत्वं भवदुक्तमभ्युपेत्य प्रथम वदामः। तेषामदोषत्वं क्वाचित्कमेव हि। न सार्वत्रिकम्। तथासति सर्वशास्त्रकाराभिमततद्दोषत्वानुपपत्तिप्रसंगात्। एवञ्च भवदुक्तरीत्या प्रमेयत्वादिस्थले, बीजाङ्कुरस्थलेऽपि च अगत्या तददोषत्वेऽपि प्रकृते तददोषत्वे प्रमाणाभावात् तददोषत्वकथनमसगतमेव। वस्तुतस्तु प्रमेयत्वस्थलादौ नात्माश्रयादिदोषप्रसक्तिलेशोऽपि। नहि प्रमेयत्वं नाम कश्चिदखण्डो धर्मः। किन्तु प्रमितिविषयतैव। प्रमितिविषयतारूपोऽयं प्रमेयत्वधर्मः तत्तत्र भिन्नभिन्न एव। नचैवं सति तस्य केवलान्वयित्वानुपपत्तिरिति वाच्यम्। विषयतात्वेन रूपेण तदुपपत्तेः। इत्थच प्रमेयत्वे विद्यमानं प्रमाविषयत्वमन्यत्। घटपटादौ विद्यमानं च तत् भिन्नभिन्नमेवेति कुतोऽत्राऽऽत्माश्रयदोषापादनकुतर्कावसरलेशः। बीजाङ्कुरादौ च व्यक्तिभेदेन नान्योन्याश्रयगन्धोऽपीति च भवतैवोक्तम्। ततश्च कुत्र स्थले आत्माश्रयो वा अन्योन्याश्रयो वा विद्यमानोऽप्यदोषत्वेनाङ्गीकृत इति भवतोच्यते?। एवं च भवतामेवायं कुतर्कावसर इति स्फुटं विश्वेषां विमत्सराणा विदुषाम्॥

यदत्र (५६-पु) "यत्र भ्रान्तिस्तत्रैव दोषः इति रजतभ्रमादौ दृष्टत्वात् जीवेश्वरादिनिखिलजगद्भ्रान्तिर्यत्र दृश्यते तत्रैवाज्ञानदोषाश्रयत्वं वक्तव्यमिति जीवसाक्षिण एवाज्ञानाश्रयत्वं न ब्रह्मणः। स एवान्तः

करणोपाधिसम्बन्धेन प्रमातेति निगद्यते। नासावविद्या प्रमातरि समाश्रिता, प्रमातुरभावेऽपि सुषुप्तौ तद्दर्शनात्। अहमज्ञ इति प्रतीतिस्तु अज्ञानाश्रयचैतन्य एवान्तःकरणतादात्म्याध्यासेन समानाश्रयत्वसम्बन्धेन युक्तैव। तस्य च साश्रयत्वेनैव स्वरूपलाभ इति द्वयोरप्यनादित्वात् नान्योन्याश्रयदोषः। अतो जीवसाक्षिभास्यतया सर्वानुभवसिद्धमज्ञान कथं तदनाश्रयं स्यात्?। यथाऽखण्डकालपरिच्छेदकक्रियादेस्तस्मिन्नेव काले "तदेतत्कालवर्ती"ति व्यवहारात्समाश्रयः, तथाऽखण्डब्रह्मपरिच्छेदकजीवाश्रिताऽविद्यापि तस्मिन्नेव चिदात्मनि वर्तत इति तदुभयावधिभूतं ब्रह्मैव तदुभयाध्यासाधिष्ठानम्। यथा वा गुणवत्त्वद्रव्यत्वयोरेकात्माधिकरणत्वमिष्यते परैः, एवं जीवत्वाविद्यावत्त्वयोरेकमविद्याविशिष्टं चैतन्यमधिकरणमिति तत्रैव तयोर्बाधः। जीवत्वादेरनादित्वेन नात्माश्रयादिदोषः" इति वाचस्पतिसंमतजीवाज्ञानवादसमर्थकश्रीकृष्णानन्दसरस्वतीस्वामिमतोपन्यसनम्—तत् सर्व परस्परव्याहत्यसाङ्गत्यादिदुष्टम्॥

तथाहि—रजतभ्रान्तितद्दोषयोर्यथा सामानाधिकरण्यं दृश्यते लोके, तथैव जीवेश्वरादिनिखिलजगद्भ्रान्तितद्दोषभूताज्ञानयोरप्यवश्यं सामानाधिकरण्यमभ्युपगन्तव्यमिति तादृशजगद्भ्रान्तिः जीवसाक्षिण एवेति तत्रैवाज्ञानमपीति साधन लोकविरुद्धम्। लोके हि रजतभ्रमः शुक्त्यादिद्रष्टुः देवदत्तादेः पुरुषस्यैव दृश्यते। भ्रमानुगुणदोषश्च शुक्त्यादिगतः श्वैत्यादिरूपः। शुक्तिगतासाधारणधर्मशुक्तित्वाद्यज्ञानं च पुरुषनिष्ठमेव। तथा प्रकृते न संभवति भवन्मते। न हि कश्चित् पुरुषः भ्रमविषयचैतन्यातिरिक्तः भवद्भिरभ्युपगम्यते, शुक्त्यतिरिक्तदेवदत्तादिरिव। किञ्च—शुक्ति- तद्द्रष्टृपुरुष- तदीयरजतभ्रमानुगुणदोषाणां सत्यत्वमेव लोकदृष्टम्। शुक्तितत्त्वदर्शनेन तु शुक्तिरजतमेव बाधितं भवति, नतु पुरुषादिकमपीत्येव लोकदृष्टम्। भवद्भिस्तु शुक्तिस्थानापन्न

चैतन्यमेव तत्त्वदर्शनेऽवशिष्यते। तत्त्वमपि शुक्तित्वस्थानापन्नं तदेव चैतन्यम्। रजतभ्रमस्थानापन्नजगद्भ्रमोपि तस्यैव चैतन्यस्येत्याद्युच्यते। एव सति कथं भवतां लोकदृष्टान्तोपादानं घटेत। न केवलं न घटते, तदुदाहरणं भवतां विपरीतफलमेवेति वित्त॥

अपि च, जगद्भ्रान्तितद्दोषभूताज्ञानयोर्जीवसाक्षिनिष्ठत्वं भवदुच्यमानं सुतरां न घटते। अन्तःकरणोपहितं चैतन्यं जीवसाक्षीति भवन्मतम्। अन्तःकरणं चाज्ञानकल्पितमित्येव वक्तव्यं भवद्भिः। अन्यथा ब्रह्मवत्सत्यत्वेनाद्वैतहानिप्रसङ्गात्। अज्ञानं च किमाश्रयमितिच इदानी प्रश्नः। आश्रयः अन्तःकरणोपहितचैतन्यरूपजीवसाक्षीति कथने अन्योन्याश्रयदोषो दुष्परिहर एव। अन्तःकरणोपहितचैतन्यरूपजीवसाक्षिप्रसिद्धौ आश्रयसिद्ध्याऽज्ञानसिद्धिः। अज्ञानसिद्धौ तत्कल्पितान्तःकरणसिद्ध्या तदुपहितचैतन्यरूपजीवसाक्षिप्रसिद्धिरित्यन्योन्याश्रयस्य तादवस्थ्यात्॥

किञ्च—जीवसाक्षिणः जीवेश्वरादिनिखिलजगद्भ्रान्तिरित्येतत्सुतरामसम्बद्धम्। नहि जगद्भ्रमात्पूर्वं जीवस्य वा तत्साक्षिणो वा प्रसिद्धिस्संभावनीयापि भवेत्। अपिच श्रीकृष्णानन्दसरस्वतीमते जीवसाक्षिण एवाज्ञानाश्रयत्वांगीकारदर्शनात्, वाचस्पतिमते च जीवस्यैवाज्ञानाश्रयत्वमंगीक्रियत इति भवतैव पूर्वमुक्तत्वात्, वाचस्पतिमतसमर्थकमिदं मतमित्यपि मृषैवेति सिद्ध्यति। तथाच जीवाज्ञानपक्षः परित्यक्त एव स्यात्। नच—अन्तःकरणावच्छिन्नचैतन्यरूपजीव- तदुपहितचैतन्यरूपजीवसाक्षिणोरुभयोस्स्वरूपभेदाभावेन न जीवाज्ञानपक्षपरित्यागः—इति वाच्यम्। ब्रह्मचैतन्यान्तःकरणोपहितचैतन्ययोरपि स्वरूपाभेदेन ब्रह्माज्ञानवादपर्यवसानप्रसङ्गात्॥

अपिच—“नासाववि‍द्या प्रमातरि समाश्रिता” इत्यादि भवदुक्तमसङ्गतमेव। अन्तःकरणावच्छिन्नचैतन्यं हि प्रमातेत्युच्यते

भवन्मते। वाचस्पतिमिश्रमते "अन्तःकरणावच्छिन्नमविद्यावच्छिन्नं वा जीव इति हि पूर्वमुक्तम्। एवंच प्रमातैव जीव इत्युक्तं भवति। सुषुप्तावहङ्कारविलयेन प्रमातुरभावेन तदनाश्रितत्वेऽज्ञानस्य जीवा-श्रितत्वमपि परित्यक्तमेव स्यात्। अन्तःकरणावच्छिन्नचैतन्यरूपजीवस्य सुषुप्तावप्रसिद्धेः॥

किञ्च–अहमज्ञ इति प्रतीतिरपि भवन्मतेऽनुपपन्नैव। अहमर्थाहङ्का-राश्रयत्वेनैव हि अज्ञानानुभवः। नचान्तःकरणे—अज्ञानाश्रयचैतन्य-तादात्म्याध्यासेनास्याः प्रतीतेरुपपत्तिरिति वाच्यम्। सुषुप्तावहङ्कार-विलयाभ्युपगमात् तस्याज्ञानाश्रयचैतन्येऽध्यासायोगात्। नच न सुषुप्तिकालीनेयं प्रतीतिः; जाग्रत्कालीनेति वाच्यम्। सुषुप्तौ अज्ञान-सत्ताप्रमाणतया एतत्प्रतीत्युदाहरणानुपपत्तेः। तथाच 'सुषुप्तौ तद्दर्श-नात्' इति भवदुक्तमनर्थमेव। नच सुषुप्त्यनन्तरकालीन न किञ्चिदहम-वेदिषमितीदमेव तद्दर्शनमिति वाच्यम्। सुषुप्तावहमर्थाहङ्कारविलयात्, तदवच्छिन्नचैतन्यरूपजीवस्यापि नाशावश्यंभावात् अज्ञानस्य निराश्रय-त्वापत्त्या वा, शुद्धचैतन्याश्रयत्वापत्त्या वा "न किञ्चिदहमवेदिष" मिति प्रतिसन्धानानुपपत्तेर्दुष्परिहरत्वात्॥

"अज्ञानस्य साश्रयत्वेनैव स्वरूपलाभः" इत्याद्युक्तमपि व्याहतार्थ-मेव। शुद्धचैतन्यव्यतिरिक्तजीवभावादिकल्पकत्वेनैव ह्यज्ञानोपगमः। अज्ञानस्य यदि जीवाश्रितत्वेनैव स्वरूपसिद्धिरित्युच्यते, तदा जीव-भावादीनामज्ञानकल्पितत्वासंभवेनाद्वैतहानिप्रसङ्गः। अज्ञानाभ्युपगम-वैयर्थ्यं च। अनादित्वेनान्योन्याश्रयादिपरिहारप्रयासस्तु विफल इति कल्पितत्वानादित्वविरोधादिना पूर्वमेवोक्तम्। तथा च ब्रह्मव्यतिरिक्त-सर्वमिथ्यात्ववादिना भवता पक्षेऽज्ञानेन कल्पनीयजीवाश्रितत्वमज्ञानस्य सर्वथा दुरुपपादमेवेति सिद्धम्॥

शुद्धचैतन्याश्रितत्वेऽज्ञानस्यासंभाविते सति, तस्य जीवाश्रितत्व-वादावतारे, शुद्धचैतन्ये जीवभावस्याज्ञानकल्पनीयत्वात् तत्कल्पनातः पूर्वं, जीवभावाभावात् कथमज्ञानाश्रयत्व जीवस्य, कथं वा जीव-कल्पकत्वं निराश्रयाज्ञानस्येत्यन्योन्याश्रये आपाद्यमाने, अखण्डकाल-परिच्छेदकक्रियादेस्तत्कालाश्रितत्वोदाहरणमतीवोपहास्यमेव। कालपरि-च्छेदकक्रियादिर्हि स्वयमुत्पद्यमानः कालसम्बन्धं प्राप्तः तं परिच्छिन्दन् तदाश्रितो भवति। न तत्र खण्डकालो मिथ्याभूतः क्रियादिना अवच्छेदकेन कल्पनीयः। प्रकृते च शुद्धचैतन्यव्यतिरिक्तजीवभावस्य मिथ्याभूतस्य कल्पनीयत्वात् कल्पकाज्ञानस्य चाश्रायासंभवात् अन्योन्याश्रयो दुरुद्धर एव॥

किञ्च—कालस्य क्रियादिपरिच्छेदकसम्बन्धो नासंभावितः। शुद्धचैतन्यस्य तु निर्विशेषत्वादज्ञानाश्रयत्वमसंभवि। ब्रह्मपरिच्छेदि-काऽविद्या च जीवाश्रिता सती परिच्छिनत्तीत्यपि वक्तुं दुश्शकम्। अविद्यया ब्रह्मपरिच्छेदे जीवभावप्रसिद्धिः। जीवभावे प्रसिद्धे जीवाश्रिता सती सा ब्रह्म परिच्छिन्द्यादित्यन्योन्याश्रयानिस्तारात्। अतः "अखण्डब्रह्मपरिच्छेदक-जीवाश्रिताविद्यापि तस्मिन्नेव चिदात्मनि वर्तते" इति भवदुक्तं सर्वथाऽसम्बद्धमेवेति स्पष्टम्॥

एवं गुणवत्त्वद्रव्यत्वोदाहृतिरप्यसमीचीनैव। गुणवत्त्वद्रव्यत्व-योरेकस्मिन्नात्मनि सामानाधिकरण्यमङ्गीक्रियते परैरित्येतत्सत्यम्। परन्तु द्रव्यत्वं न मिथ्याभूतं गुणैः कल्पनीयं तैरभिमन्यते। द्रव्यत्व जातिविशेष एव पूर्वसिद्धः। उत्पत्तिक्षणावच्छेदेनापि गुणाद्यभावेपि जातिरस्तीत्येव तेषां प्रक्रिया। गुणवत्त्वं च द्रव्य-लक्षणमिति परसंमतम्। प्रकृते तु मिथ्याभूतस्य जीवभावस्याज्ञान-कल्पनीयत्वाभ्युपगमादेव हि जीवाश्रितमज्ञानं जीवभावकल्पक-

मित्यन्योन्याश्रयापत्तिः क्रियते। सैषा भवतामपरिहार्यैव। एवं च "जीवत्वाविद्यावत्त्वयोरेकमविद्याविशिष्टं चैतन्यमधिकरणम्" इति भवदुक्तमेव भवदभिमति-व्याघातकमिति स्फुटम्। अविद्याविशिष्टं चैतन्यमविद्याधिकरणमित्येतत्सर्वात्मनोपहास्यमेव। अत्र कल्पतरूक्तोदाहरणं पूर्वमेव निरस्तमवधेयम्॥

यच्चात्रैव (५६-पु) "कल्प्यमान च तत् प्रत्यगात्मन्यध्यस्ततयैव धर्मिग्राहकमानेन सिद्ध्यतीति, न जानामीति साक्षिप्रतीतिसिद्धमनिर्वाच्यमज्ञानमेव तत्", "अज्ञानमेव स्वपराध्यासे कारणं। न चात्माश्रयादिदोषप्रसङ्गः, अनादित्वेन तन्निरासात्। अनादित्वेनोत्पत्त्यभावात्। स्वप्रकाशात्मन एव तज्ज्ञप्तिरूपत्वात्" इति सिद्धान्तबिन्दूदाहरणम्। तदपि मन्दम्। न जानामीति जीवसाक्षिरूपधर्मिग्राहकमानेन यदि जीवाश्रितमेवाज्ञान सिद्ध्यतीत्युच्यते, तदा जीवस्य वाऽविद्याया वाऽध्यस्तत्वं कुतोऽवगम्येत। प्रतीतेरबाधितत्वात् ज्ञानाश्रययोग्ये जीवे सत्यमेवाज्ञानाश्रयत्वं सिद्ध्येत्। तत्तु अज्ञानं न भावरूप, अभावरूपमेवेत्येतत्प्रमाणावसेयम्। जीवाश्रितत्वेनैवाज्ञानसिद्ध्यभ्युपगमेऽज्ञानकल्पितत्वं जीवस्य कथं वा घटेत?। अज्ञानं स्वेनैव स्वयं कल्प्यत इतीदमसङ्गतम्। आत्माश्रयदोषात्। अनादित्वेन तत्परिहारकथन तु कल्पितत्वानादित्वमिथोविरोधादिना दुश्शकमित्युक्तमेव। स्वप्रकाशात्मन एवाज्ञानज्ञप्तिरूपत्वे स्वप्रकाशचैतन्यस्य नित्यत्वेनाज्ञानज्ञप्तेरपि नित्यत्वापत्त्याऽनिर्मोक्षप्रसङ्गः॥

एवं चोत्पत्तिस्थितिज्ञप्तिषु परस्परसापेक्षत्वानिरासात्, अवच्छेद्यावच्छेदकभावाङ्गीकारेऽपि अन्योन्यतादधीन्यानिवारणात्, अन्योन्याश्रयादेस्सर्वत्र दोषत्वसंप्रतिपत्तेश्च सर्वथा जीवाज्ञानवादः अप्रामाणिकः निर्युक्तिकः विरुद्धश्चेति सिद्धम्॥

॥ ब्रह्माज्ञानवादनिरासः ॥

यदत्र (५७-पु) "अज्ञानस्य शुद्धब्रह्माश्रितत्वमपि युक्तमेव। नच विरोधः शङ्क्यशङ्कः, तत्त्वमस्यादिवेदान्तवाक्यजनितब्रह्माकारचित्तवृत्तिप्रतिफलितचैतन्यस्य तादृक्चैतन्यप्रतिबिम्बविशिष्टवृत्तेरेव वाऽज्ञानविरोधितया स्वप्रकाशस्वरूपचैतन्यस्य तद्विरोधित्वाभावात्"इत्यादि। तन्न सङ्गच्छते। अज्ञानं हि ज्ञाननिवर्त्यमभिमतम्। ज्ञानं च शुद्धचैतन्यातिरिक्तं भवद्भिर्नाङ्गीक्रियते। शुद्धचैतन्यं चेदज्ञानाविरोधि, तर्हि तेजसः तमोविरोधित्वं नास्तीत्येवोक्तं स्यात्। ज्ञानाज्ञानयोर्हि लोके विरोधो दृश्यते। नच भवन्मतेऽपि ज्ञानात्मन्यात्मनि प्रकाशमाने सत्येवाज्ञानानुभवोऽङ्गीक्रियत इति वाच्यम्। ज्ञानरूपात्मातिरेकेण धर्मभूतज्ञानस्यास्माभिरङ्गीकारेण तेनैव सह विरोधोपपत्तेः। देवदत्तस्य घटज्ञानेन तदज्ञानं निवर्तत इति हि लोके दृश्यते। भवन्मते च ज्ञानद्वयाभावात् शुद्धचैतन्यस्यैवाऽज्ञानविरोधित्वाङ्गीकारावश्यंभावेन तस्मिन् चैतन्ये स्वयं प्रकाशमाने सति तस्याज्ञानाश्रयत्वमनुपपन्नमेव। नचास्माभिरपि शुद्धचैतन्यातिरिक्तप्रमाणज्ञानाङ्गीकारात् तेनैवाज्ञानविरोधोपपत्त्या शुद्धचैतन्यस्याज्ञानाश्रयत्वं नानुपपन्नमिति वाच्यम्। विकल्पासहत्वात्। प्रमाणज्ञानमिति किं प्रमात्वविशिष्टज्ञानं शुद्धचैतन्यातिरिक्तं किञ्चिदुच्यते, उत-तादृशप्रमात्वविशिष्टं तदेव शुद्धचैतन्यम्। नाद्यः-अपसिद्धान्तात्। नान्त्यः-विशिष्टस्य शुद्धानतिरेकात् अज्ञानस्य विशिष्टविरोधित्वे शुद्धविरोधित्वानपायात्। शुद्धचैतन्ये प्रमात्ववैशिष्ट्यस्यासंभवाच्च॥

किञ्च-तत् विशिष्टज्ञानं किंरूपमिति विवेचनीयम्। तत्त्वमस्यादिवेदान्तवाक्यजनितब्रह्माकारचित्तवृत्तिप्रतिफलितचैतन्यरूपं तदिति चेत्—वेदान्तवाक्यजनितचित्तवृत्तेः ब्रह्माकारत्वं नाम किमिति

वक्तव्यम्। ब्रह्मणो निराकारत्वात् तदाकारत्वं कथं चित्तवृत्तेर्घटताम्। जडायाश्चित्तवृत्तेश्चैतन्यप्रतिफलनोक्तिश्च मुखादौ दर्पणादिप्रतिफलनोक्ति-तुल्येत्युक्तमेव। उक्तं हि पूर्वाचार्यैः, "शान्ताङ्गार इवादित्य"मित्यादि॥

किञ्च-ब्रह्मव्यतिरिक्तसर्वमिथ्यात्ववादिनां भवतां मते न किञ्चिदपि प्रमाणज्ञानं भवेत्। सर्वस्यापि दोषजन्यत्वाविशेषादिति तदप्रसिद्धिरेव। नचाज्ञानप्रकाशकत्वात् तन्नाशकत्वं शुद्धचैतन्यस्य विरुद्धमिति वाच्यम्। शुद्धे तत्र तद्भासकत्वस्यापि विरुद्धत्वात्। तथा सति लाघवात्प्रपञ्चभासकत्वस्यैवांगीकारापत्त्याऽज्ञानवैयर्थ्यापातात्॥

यदत्रोच्यते, "स्वयंप्रकाशस्वरूपावभासे सत्यपि, 'ब्रह्म न जानामी' त्यनुभवेन स्वरूपचैतन्यस्याज्ञानविरोधित्वं नाङ्गीक्रियते" इत्यादि। तत्रोच्यते। शुद्धचैतन्यस्वरूपे स्वयं भासमाने ब्रह्म न जानामीत्यनुभवः कस्य भवति?। नहि जडस्य तादृशानुभवो घटते। शुद्धचैतन्याति-रिक्तानभ्युपगमात्तस्यैवायमनुभव इति वक्तव्यम्। तत्र च शुद्धचैतन्ये निराकारे, 'कस्यचिदाकारस्य भानेऽपि आकारान्तराभानात् ब्रह्म न जानामीत्यनुभवः' इत्यपि दुर्वचम्। इत्थंच भवदभिमतशुद्धचैतन्य-स्याज्ञानाश्रयत्वाङ्गीकारे स्वयंप्रकाशत्वं न स्यात्। स्वयंप्रकाशत्वे वाऽज्ञानाश्रयत्वं न स्यात्। ब्रह्मणो नायमनुभव इति चेत्—हन्त तर्हि अज्ञानाश्रयत्वमपि ब्रह्मणो न स्यादेव। यच्च—"स्वरूपज्ञानस्य तद्विरोधित्वे रजतस्वरूपज्ञानस्यापि तद्विरोधित्वप्रसङ्गेन निवर्तकान्तरापेक्षा न युज्यते" इति। तद्भवतामेव विपरीतार्थम्। स्वरूपज्ञानस्याज्ञान-विरोधित्वाङ्गीकारे शुक्तिरजतस्थलेपि शुक्तिस्वरूपज्ञानस्यैव तदज्ञान-निवर्तकत्वापत्त्या तत्र निवर्तकान्तरापेक्षा न युज्यते-इति हि भवता वाच्यम्। तदनुक्त्वा, "रजतस्वरूपज्ञानस्यापी"त्याद्युच्यते। अस्य कोऽर्थ इति न जानीमः। असङ्गतमेवेदम्। नचात्र न शुक्तिरजतदृष्टान्तो

विवक्षितः। किन्तु चैतन्यस्वरूपस्यैव चेत् अज्ञानविरोधित्वं, तदा रजतस्वरूपज्ञानस्यापि अज्ञानविरोधित्वप्रसङ्गेन निवर्तकान्तरापेक्षा न युज्यत इत्येव विवक्षितमिति वाच्यम्। विकल्पासहत्वात्। किमत्र ब्रह्माज्ञानं विवक्षितं, उत—रजताज्ञानम्?। नाद्यः—ब्रह्माज्ञानस्य रजतस्वरूपज्ञानविरोधित्वप्रसञ्जनानुपपत्तेः। नह्यन्याज्ञानमन्यज्ञानेन विरुद्ध्येत। तथासति घटज्ञानेनापि पटाज्ञानस्य विरोधापातात्। नान्त्यः—रजतस्वरूपज्ञानमित्यस्य निर्धर्मकस्वरूपाप्रसिद्ध्या रजतत्व-विशिष्टज्ञानार्थकत्वात् तस्य च ज्ञानस्य रजताज्ञानविरोधप्रसङ्गस्येष्टत्वात्। नच–तर्हि भवन्मते सर्वस्यापि सधर्मकत्वात् तद्विशिष्टस्यैव भानसम्भवात् कथं भ्रमप्रसक्तिरिति वाच्यम्। भ्रमसहाऽऽकारविशिष्टतया स्वरूपभाने भ्रमविरोध्याकाराज्ञाने च भ्रमोपपत्तेः। यच्चात्रोच्यते — "अज्ञान-तत्प्रयुक्ताकारातिरिक्ताकाराधिष्ठानप्रमाया एवाज्ञानतत्कार्यनिवर्तकत्वं वक्त-व्यम्" इति–तत् भवद्विपरीतमेव। प्रकृते अज्ञाननिवर्तकत्वेनाभि-मताधिष्ठानप्रमा ब्रह्मप्रमैवेति वक्तव्यम्। तत्र चाधिष्ठानेऽज्ञानतत्प्रयुक्ता-कारातिरिक्ताकारः कोऽभिमतः भवताम्?। यदि वास्तविकस्तादृशाकारः, तदाऽद्वैतहानिः। यदि कल्पितः, तदा प्रमात्वमपैत्येव। अध्यस्तरजतत्वेन शुक्तिज्ञानात् रजताज्ञानानिवृत्तिवत्, अध्यस्ताकाराधिष्ठानज्ञानात् अज्ञानानिवृत्तिप्रसङ्गः।

यदप्यत्रैव (५७–पु) "स्वरूपचैतन्यस्याज्ञानतत्कार्यविषयकत्वेना-ज्ञानतत्कार्यनिवर्तकत्वायोगात्। अत एव घटादिज्ञानस्य नाज्ञान-निवर्तकत्वम्। प्रमात्वेन भासमानस्यैव ज्ञानस्याज्ञाननिवर्तकत्वम्" इति। तदप्यसाधु। स्वरूपचैतन्यस्याऽज्ञानतत्कार्यविषयकत्वाभ्युपगमे सविषयत्वापत्तेः। किञ्च—प्रमात्वेन भासमानस्यैव ज्ञानस्याज्ञाननिवर्त-कत्वमित्यस्य कोऽर्थः?। प्रमात्वेन भानं किं भ्रमात्मकं, उत प्रमात्मकम्? नाद्यः—भ्रमस्याज्ञाननिवर्तकत्वायोगात्। नान्त्यः–शुद्धचैतन्ये ब्रह्मण्येव

प्रमात्वाङ्गीकारापत्त्याऽद्वैतहानेः। अनन्तरं च भवतैव "स्वप्रकाशस्वरूपचैतन्यस्य चाज्ञाननिवृत्त्यौपयिकप्रमात्वसिद्ध्यर्थ"मिति ह्युच्यते। अपिच शुद्धचैतन्य एव प्रमात्वसिद्ध्यर्थं प्रमाणजन्याखण्डाकारवृत्तिविषयत्वमङ्गीक्रियते। तेन वृत्तिविषयत्वेन जायमानं प्रमात्वं कथमज्ञाननिवृत्तिप्रयोजकं भवेत्? । नहि शुक्तिस्वरूपज्ञानं प्रमाभूतमपि शुक्तिगतासाधारणभूतशुक्तित्वाविषयकं चेत् शुक्त्यज्ञाननिवर्तकं दृश्यते। प्रकृते च निर्धर्मकब्रह्मप्रमाज्ञानस्य स्वरूपज्ञानाविशेषात् स्वरूपज्ञानस्येवाज्ञाननिवर्तकत्वमनुपपन्नमेव॥

यदत्र (५८-पु)ब्रह्मणो वृत्तिविषयत्वविषये उदाहृतं, "ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते। स्वयं प्रकाशमानत्वात् नाभास उपयुज्यते॥" इति–तदपि "वृत्तिव्याप्यत्वमात्रेण ब्रह्मण्यज्ञानमाश्रितम्। न निवर्तेत, विषयवैषम्याभावतस्तयोः॥" इति प्रत्युक्तम्।

यदत्रैव (५८–पु)ब्रह्मणस्स्वप्रकाशतया श्रुतिस्मृतिसिद्धत्वात्, अप्रमेयमित्यस्य फलव्याप्यत्वनिषेधपरत्वात् वृत्तिविषयत्वेऽपि तस्य न जडत्वप्रसङ्गः। वृत्तिप्रतिबिम्बितचैतन्यविषयत्वं हि जडत्वापादकम्। तच्च घटादेरेव, न ब्रह्मणः" इत्यादि, तदप्यसङ्गतम्। स्वरूपज्ञानं नाज्ञानविरोधि, किन्त्वखण्डाकारवृत्तिप्रतिफलितचैतन्यस्यैवाज्ञानविरोधित्वमिति पूर्वं भवतैवोक्तम्। तत्र तादृशवृत्तिप्रतिफलितचैतन्यं ब्रह्माविषयकं चेत् नाज्ञानविरोधि भवेत्। तथासति घटाविषयकस्यापि ज्ञानस्य घटाज्ञानविरोधित्वापत्तेः। अतो ब्रह्मविषयकमेव तादृशवृत्तिप्रतिफलितचैतन्यमज्ञानविरोधीत्यकामेनाप्यङ्गीकरणीयमेव। तथाच तादृशवृत्तिप्रतिबिम्बितचैतन्यविषयस्य ब्रह्मणो जडत्वापत्तिरनिवार्यैव। चैतन्यस्य वृत्तिविषयत्वं नाम वृत्तिप्रतिफलितत्वमेव हि भवदभिमतम्।

यदि च वृत्तिप्रतिफलितत्वमेवाङ्गीक्रियते, न तत्प्रतिफलितचैतन्य-विषयत्वमित्युच्यते, तदा स्वप्रकाशत्वेन स्वस्यैवाज्ञानविरोधित्वापत्तौ तदाश्रयत्वानुपपत्तिरेव ॥

यदपि (५८-५९-पु) "स्वरूपज्ञानस्य प्रमाणज्ञानस्य च विषयवैषम्याभावेऽपि पूर्वस्य नाज्ञाननाशकत्वं, उत्तरस्यैवेत्यत्र ज्ञानगतवैषम्यमेव प्रयोजकम्। यथाऽभिज्ञाप्रत्यभिज्ञयोर्विषयवैषम्याभावेपि कारणविशेष-निबन्धनज्ञानगतविशेषादेव प्रत्यभिज्ञाया द्वित्वभ्रमविरोधित्वं, नाभि-ज्ञाया इति दृश्यते। नहि–'अयं देवदत्तः' इत्यभिज्ञया देवदत्तद्वित्वभ्रमो निवर्तते। अपितु 'सोयं देवदत्तः' इति प्रत्यभिज्ञयैव हि निवर्तते सः। नच तयोर्विषयभेदश्शक्यशंकः। देवदत्तैक्यविषयकत्वमुभयत्रापि तुल्यम्। कालद्वयसम्बन्धोऽपि प्रत्यभिज्ञायामभिज्ञाद्वयादेव विषयीभवति। न ह्यभिज्ञाद्वयोपस्थितिमन्तरा प्रत्यभिज्ञोत्पत्तिस्संभवति। तथाच स्वकारणी-भूततत्तेदन्तापदार्थद्वयोपस्थितिरूपाभिज्ञाविषयकालद्वयसम्बन्धित्वं प्रत्यभि-ज्ञायामपि प्रतीयत इति तत्रापि तयोस्तौल्यमेव। अभिज्ञाप्रत्यभि-ज्ञाविभागस्तु सप्रकारकनिष्प्रकारकज्ञानत्वप्रयुक्तफलवैषम्यायत्तः। नच निष्प्रकारकप्रत्यभिज्ञा निष्प्रयोजनेति वाच्यम्। 'अयं स न वा' 'नैवायं सः' इत्यादिसंशयविपर्ययनिवर्तकत्वेन सार्थक्यात्। भेदभ्रमादौ तत्तेदन्तयोर्न विशेषणत्वेन भानम्। विरोधात्। अपितूपलक्षणत्वेनैव। एवं तत्र भ्रमादौ शुद्धयोरेव भेदप्रतियोग्यनुयोगिनोर्भानं वक्तव्यम्। तथाच शुद्धयोस्तत्तेदन्तोपलक्षितपदार्थयोर्भेदावगाहिसंशयविपर्ययज्ञान-प्रतिबन्धकत्वं शुद्धयोस्तत्तेदन्तोपलक्षितयोरभेदावगाहिप्रत्यभिज्ञाया एव युक्तम्। शुद्धयोरभेदावगाहित्वं प्रत्यभिज्ञायामेव, नाभिज्ञायामिति प्रत्यभिज्ञा सफलैव। नच शुद्धयोरभेदावगाहित्वं अभिज्ञायामेवास्त्विति वाच्यम्। अयमित्यभिज्ञाने सत्यपि पूर्वोक्तभेदभ्रमस्यानुवर्तमानत्वेन तदविरोधित्वनिश्चयात् अभिज्ञायां तत्तेदन्तयोरभेदस्य च विशेषणतयैव

भानावश्यकतया उपलक्षणत्वेन तदभानात् शुद्धाभेदावगाहित्वासंभवात्। प्रत्यभिज्ञाया विशेष्यविशेषणभावाद्यनवगाहित्वेन तुरीयविषयताशालित्वरूपनिष्प्रकारत्वमुपपद्यत एव। इत्थं च अभिज्ञाप्रत्यभिज्ञयोर्विषयवैषम्याभावेऽपि कारणविशेषाधीनज्ञानगतविशेषादेव भ्रमादिनिवर्तकत्वतदभावव्यवस्थावत् प्रकृतेऽपि स्वरूपप्रमाणज्ञानयोर्विषयावैलक्षण्येऽपि ज्ञानगतविशेषादेवाज्ञाननिवर्तकत्वतदभावव्यवस्थोपपन्नैव" इत्यादि — तत्र प्रतिवदामः। अभिज्ञाप्रत्यभिज्ञयोर्विषयावैषम्योपपादनं, तद्विभागोपपादनं, प्रत्यभिज्ञाया निष्प्रकारत्वस्थापनं, निष्प्रकारकज्ञानरूपप्रत्यभिज्ञायाः भ्रमादिनिवर्तकत्वप्रतिपादनं, इत्यादिकमेतावता भवदुपपादितं सर्वमसङ्गतमेव। अभिज्ञाप्रत्यभिज्ञयोरेकविषयत्वं नास्तीति, "अभिज्ञायां तत्तेदन्तयोर्विशेषणतया भानमेव, नतु शुद्धयोरभेदावगाहित्वम्। प्रत्यभिज्ञायामेव तत्तेदन्तयोरुपलक्षणतया भानात्, शुद्धयोरभेदावगाहित्व" मित्युपपादयता त्वयैव साधितमिति भवदुक्तं सर्वं भवतैव निरस्तमभूत्। किञ्च—'अयं देवदत्तः' इत्यस्यामभिज्ञायां देवदत्त एव प्रतीयते, नतु तस्य देशकालद्वयसम्बन्धः। स तु 'सोऽयं देवदत्तः' इत्यस्या प्रत्यभिज्ञायामेव प्रतीयते। अभिज्ञायामपि कालदेशद्वयसम्बन्धविषयकत्वोपपादनं तु आपण्डितपामरमुपहास्यमेव। अभिज्ञाद्वयमादाय तदुपपादनं तु अभिज्ञानां भवतामेव शोभनम् अभिज्ञाद्वयस्य तदानीमभावात्। अभिज्ञाद्वयजन्यत्वमेव प्रत्यभिज्ञायामसिद्धम्। पूर्वानुभवजनितसंस्कारसहकृतेन्द्रियेणैव प्रत्यभिज्ञोपपत्तौ अभिज्ञाद्वयकारणजन्यत्वानुपपत्तेः। अस्तु वा तद्द्वयजन्यत्वं, अथापि नैकस्या अप्यभिज्ञायाः प्रत्यभिज्ञासमानविषयकत्वसिद्धिः। अभिज्ञाद्वयमादाय समानविषयकत्वसंपादनं तु अप्रयोजकम्। प्रत्यभिज्ञाकारणतयाऽभिमताभिज्ञाद्वयमेव निरूपयितुं न शक्यते। प्रत्यभिज्ञाकाले पूर्वोत्पन्नाभिज्ञाया नष्टत्वात्। अतः कुत्राप्यभिज्ञायां देशकालद्वयसम्बन्धविषयकत्वाभावात्प्रत्यभिज्ञायामेव

तत्सत्त्वात् तयोर्विषयवैषम्यस्य स्फुटत्वात् प्रत्यभिज्ञाया एव भ्रमादि-निवर्तकत्वं, नाभिज्ञाया इति विषयवैषम्यादेव व्यवस्थितिः। नत्वन्यतः। प्रकृते तथा विषयवैषम्यानभ्युपगमात् स्वरूपज्ञानस्याज्ञान-निवर्तकत्वं वा, प्रमाणज्ञानस्य तदनिवर्तकत्वं वाऽऽपद्येतैव॥

प्रत्यभिज्ञाया निष्प्रकारकत्वं च विरुद्धम्। सोऽयं देवदत्त इत्यादौ तत्तेदन्तयोर्विशेषणतयैव भानावश्यंभावात्। विरोधाभावाच्च। अक्षणिकवादिनां सर्वेषामेव एकस्मिन् कालद्वयसम्बन्धस्य वा कालभेदेन देशद्वयसम्बन्धस्य वाऽविरुद्धत्वात्। तत्तेदन्तयोर्विशेषणतया भानानङ्गीकारे च देवदत्तद्वयभ्रमनिवर्तकत्वं नोपपद्येत। भेदभ्रमादौ तत्तेदन्तयोर्विशेषण-तया भाने नास्ति विरोधः। तथैव हि भासते। नहि रजतभ्रमादौ भवताप्युपलक्षणतया भानमङ्गीक्रियते रजतत्वादेः। सर्वथैव भवदभि-मतनिष्प्रकारकज्ञानमसिद्धं खपुष्पायमाणमिति च प्रथमभागे निपुणं निरूपितम्। अत एव भवदीयाभिज्ञाप्रत्यभिज्ञाविभागोपपादनमपि निरस्तम्। किञ्च—प्रत्यभिज्ञायां तत्तेदन्तयोर्विशेषणतया भाने को विरोधः?। यदि विशेषणयोस्तत्तेदन्तयोरैक्यानुपपत्तिरेवेत्युच्यते, तर्हि नीलो घट इत्यादावपि नीलत्वघटत्वयोरैक्यानुपपत्त्या विशेषणतया भानानङ्गीकारापत्तिः। नचेष्टापत्तिः—लोके सर्वत्रेयमेव रीतिरिति सर्वत्र प्रतीतेर्निष्प्रकारकत्वापत्तेः। अतोऽत्र प्रत्यभिज्ञोदाहरणं भवदभिमत-विपरीतफलमिति सिद्धम्॥

यदपि चात्र (५९–पु) प्रत्यभिज्ञोदाहरणविषय एव विवरण ग्रन्थोदाहरणम् "अभिज्ञातः प्रत्यभिज्ञायास्तावन्न प्रमेयतो विशेषः" इत्यादि, तत् उक्तरीत्यैव निरस्तमिति न तत्र पृथक् वक्तव्यं पश्यामः॥

यदपि, (५९–६०–पु) स्वयंप्रकाशरूपस्याजडस्य ब्रह्मणः स्वाश्रिता-विद्यानिवर्तने ज्ञानान्तरापेक्षा न युज्यते। अस्वयंप्रकाशरूपजडस्य

शुक्त्यादेस्तु स्वाज्ञाननिवर्तने ज्ञानान्तरापेक्षा युज्यते। तथाच स्वरूपज्ञानस्यैवाज्ञानविरोधित्वेन ब्रह्माज्ञानवादोऽनुपपन्न इत्याक्षेपे, तत्परिजिहीर्षया, स्वप्रकाशस्यापि स्वाज्ञाननिवर्तने ज्ञानान्तरापेक्षाऽस्त्येवेत्यत्र सूर्यकिरणस्य तृणादिदाहे सूर्यकान्तापेक्षा दृष्टेति दृष्टान्तप्रदर्शनं, तत्र च विषये, "तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत्। सूर्यकान्तमुपारुह्य तन्न्यायं विनियोजयेत्॥" इति श्लोकोदाहरणं, अरणिमध्यगतस्याप्यग्नेर्निर्मथनक्रियानभिव्यक्तस्यारणिदाहकत्वाभावेपि तदभिव्यक्तस्य तस्यैव तद्दाहकत्वदर्शनात्, श्रवणात्पूर्वस्यात्मस्वरूपावभासस्याज्ञानाऽदाहकत्वेपि वृत्त्यभिव्यक्तस्य तस्यैव तन्नाशकत्वमुपपद्यत इति प्रतिपादनं, शुक्त्यादावपि 'नेदं रजत'मिति विपर्यस्तवस्तुनिषेधविशिष्टशुक्तिज्ञानस्यैव भ्रमविरोधित्वं, शुक्त्यादेः स्वाज्ञाननिवर्तने ज्ञानान्तरापेक्षायां न जडत्वं प्रयोजकमित्यादिकथनं च—तत्सर्वमनिरूपकवच इति निरूपयामः। शुक्त्यादेर्जडत्वात् स्वतः स्वस्वरूपप्रकाशासंभवात् तदर्थं ज्ञानान्तरापेक्षा घटते। तेन च ज्ञानान्तरेण शुक्त्यादिस्वरूपे (शुक्तित्वादौ) प्रकाशिते शुक्त्यज्ञानं निवर्तत इति चोपपन्नम्। प्रकृते शुद्धचैतन्यस्वरूपस्य स्वप्रकाशत्वात् स्वरूपे स्वयमेव प्रकाशिते सति कथं तद्विरुद्धाऽज्ञानाश्रयत्वं तस्य घटताम्? किमर्थं ज्ञानान्तरापेक्षा वा?। स्वप्रकाशस्यापि ज्ञानान्तरापेक्षानियमकल्पने गमकं किम्?। लोके शुक्त्यादेस्तथादर्शनमेवेति चेत्—जडत्वादेव हि तत्र ज्ञानान्तरापेक्षा। ब्रह्म तु न जडम्। अतो ज्ञानान्तरापेक्षात्र न युक्तैव॥

किञ्च—वृत्तेरज्ञानविरोधित्वाङ्गीकारे, किं वृत्तित्वेन रूपेण तस्यास्तद्विरोधित्वं, उत ब्रह्मविषयकत्वेन?। नाद्यः— घटाद्यन्तःकरण वृत्तेरपि तद्विरोधित्वापत्तेः। नान्त्यः—तथासति विषयमहिम्नैव तस्यास्तद्विरोधित्वाङ्गीकारावश्यंभावेन, विषयभूते च शुद्धचैतन्यरूपे

ब्रह्मणि स्वतः प्रकाशिते सति तत्र कथमज्ञानाश्रयत्वं घटेतेत्यापत्ति-तादवस्थ्यात्। स्वतःप्रकाशस्यापि प्रमाणवृत्तिमन्तरा नाज्ञानविरोधित्व-मिति पुनः पुनः कथनेपि तत्र गमकप्रश्ने भवदाग्रहं विना न किमपि वक्तु पार्येत। नोक्तं च। घटादीनां तथा दर्शनं तु जडत्व-प्रयुक्तमित्युक्तमेव। किञ्च यदि लोकदर्शनमनुस्रियते, तदा लोके ज्ञानान्तरविषयभूतस्यैव घटादेर्निवतकत्वदृष्टया तथैवात्रापि ब्रह्मणोऽपि घटादीनामिव ज्ञानान्तरविषयत्वाङ्गीकारापत्त्या जडत्वापत्तिर्दुर्वारैव। सूर्यकिरणदृष्टान्तोपादानमपि न संगतम्। सूर्यकान्तस्य विशीर्णाग्नि-कणसमाहारकत्वात्। किञ्च, सूर्यदीप्तेस्सूर्यकान्तं विनैव साक्षादेव दाहकत्वं दृष्टम्। सूर्यरश्मिभिस्संपातिपक्षदाहे किं सूर्यकान्तसाहाय्य-मुक्तम्?। किं प्रकृतेऽपि वृत्तिं विनापि स्वरूपचैतन्यस्याज्ञानविरोधित्वं भवद्भिरङ्गीक्रियते?। सर्वथा दृष्टान्तवैघट्यमत्र दुरुद्धरमेव। अत्र "तृणादेर्भासिकाप्येषा" इत्यादिश्लोकश्च,—"सूर्यदीप्तिर्दहत्येव साक्षादपि तृणादिकम्। विनैव सूर्यकान्तादिं, स्मर सम्पातिदुर्दशाम्॥ स्वरूप-ज्ञानमज्ञानबाधकं न मतं हि वः। वृत्तिं विनाप्यतः प्रोक्तो दृष्टान्तो दुर्घटः स्फुटम्॥" इति प्रत्युक्तः।

एवमेवारणिदृष्टान्तोऽपि न जाघटीति। अरणिगर्भस्थो वह्निस्त-दानीं न दहत्यरणिम्। अभिव्यक्तस्तु दहति। तद्वत् स्वरूपज्ञानं श्रवणादिनाऽभिव्यक्तं अज्ञान नाशयतीति हि भवदभिमतम्। अरण्यन्तर्वर्तित्वाद्वह्नेर्दाहकत्वं प्रतिबद्धं मण्यादिनेव। निर्मथनादिनाऽभि-व्यक्तौ मण्यपनयनदशायामिव दहत्येव। प्रकृते दाह्यारण्याश्रितो वह्निरिव नाश्याज्ञानाश्रितं स्वरूपज्ञानमिति—विपरीतं हि भवेत्। किञ्च ज्वलति वह्नौ दाहकत्वं यदि न स्यात् तदा स दृष्टान्तः स्यात्। नैवं लोके दृश्यते। प्रकृते तु स्वयंप्रकाशे शुद्धचैतन्ये भासमाने कथम-

ज्ञानाश्रयत्वं घटत इत्याक्षेपे, अरण्यन्तर्गताग्निदृष्टान्तोपादानमसङ्गतम्। स्वयंप्रकाशचैतन्यस्य जडीभूतवृत्त्याऽभिव्यक्तिकथा तु दूषितैव॥

अपिच शुक्तिरजतभ्रमस्थले, नेदं रजतमिति विपर्यस्तवस्तु-निषेधविशिष्टशुक्तिज्ञानस्यैव भ्रमविरोधित्वमिति कथनं न साधु। इदं न रजतमित्यनेन वा इयं शुक्तिरित्यनेन वा भ्रमनिवृत्त्युपपत्त्या विशिष्टविरोधित्वकल्पनाया अन्याय्यत्वात्। उक्तं हि "यथार्थं सर्वविज्ञान"मित्यत्र श्रुतप्रकाशिकायां, "नेदं रजतमित्यत्र नञर्थः क इति चेत्—शुक्तित्वमेवेति ब्रूमः। यदाकारग्रहणेन पूर्वज्ञानोत्पन्नायाः प्रवृत्तेर्निवृत्तेर्वा निवारणं स एवाकारो नञर्थः। स चाकारः प्रतियोगिसापेक्षैः 'नेदं रजत'मित्यादिशब्दैस्तदनपेक्षैश्शुक्त्यादिशब्दैश्च व्यवह्रियते" इति। अतः समानार्थकयोः, 'इयं शुक्तिः, नेद रजत' मित्यनयोरन्यतरेणैव भ्रमनिवृत्त्युपपत्त्या विशिष्टविरोधित्वं न संभवति। इदं तु तत्त्वम्। दृष्टान्ते शुक्तिः, तदसाधारणधर्मश्चेति द्वयमस्ति। असाधारणधर्मानवगमात् भ्रमः। तदवधारणात् तन्निवृत्तिः। प्रकृते तु अद्वैतिमते चैतन्यस्य निर्धर्मकत्वात् स्वरूपाज्ञानादेव जगद्भ्रमः, तज्ज्ञानाच्च तन्निवृत्तिरित्येव वक्तव्यम्। तत्र स्वरूपेऽज्ञानाभ्युपगमे स्वरूपज्ञानस्य जडीभूतवृत्तिप्रतिफलितत्वमात्रेण पूर्वोक्तरीत्या विषय-वैषम्याभावात् नैवाज्ञाननिवर्तकत्वं स्यात्। निवर्तकत्वं चेदुपेयते शुद्धचैतन्यस्याज्ञानाश्रयत्वमनुपपन्नमेवेति। विस्तरस्तु श्रीभाष्यश्रुत-प्रकाशिकाशतदूषणीपरमार्थभूषणादावनुसन्धेयः॥

यदपि च (६०-पु) "औपनिषदात्मविज्ञानोत्पत्तिपूर्वकालीनं यौक्तिकं प्रपञ्चमिथ्यात्वज्ञानं प्रत्यक्षादीनां तात्त्विकप्रामाण्यविघटनेना-ऽऽत्मतत्त्वज्ञानोत्पत्तावङ्गं भवेत्, न तु तदेवाज्ञाननिवर्तकम्" इत्यादि। तत्सर्वमपहतार्थम्। प्रपञ्चमिथ्यात्वस्यैव मिथ्यात्वात्।

अबाधितप्रत्यक्षसिद्धप्रपञ्चस्य मिथ्यात्वे किं गमकम् ?। प्रपञ्चसत्यत्वावगमकं प्रत्यक्षं दोषमूलमिति चेत्–तर्हि "सत्यं ज्ञान" मित्यादिश्रुत्यापि दोषमूलत्वाविशेषात् ब्रह्मणस्सत्यत्वादिकं न सिद्ध्येत्। नच प्रपञ्चमिथ्यात्वं अद्वैतवादिन्या श्रुत्या प्रतिपाद्यत इति वाच्यम्। "यजमानः प्रस्तरः, आदित्यो यूपः" इत्यादिश्रुत्यापातार्थस्यापि प्रत्यक्षबाधेऽपि प्रामाण्यापत्तेः। नच—प्रपञ्चस्याबाधितप्रत्यक्षसिद्धत्वं नास्ति। प्रपञ्चस्य ब्रह्मसाक्षात्कारबाधात् इति वाच्यम्। तयोर्बाध्यबाधकभावस्य निरूपयितुमशक्यत्वात्। नहि पटसाक्षात्कारेण घटप्रत्यक्षं बाध्यते। समानविषययोरेव बाध्यबाधकभावसंभवात्। ननु "तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः"(श्वे-प्र.अ)इति ब्रह्मसाक्षात्कारात्प्रपञ्चनिवृत्तिः श्रूयत इति चेन्न—तत्रैवोपरि "ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि" इति श्रूयमाणत्वात् "तमक्रतुं पश्यति वीतशोकः धातुः प्रसादान्महिमानमीशम्" इति तत्रैव परमात्मानुग्रहाधीनवीतशोकत्वकथनात्, "दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।।" इति गीतैकार्थ्याच्चात्र ब्रह्मसाक्षात्कारेण प्रपञ्चबाधानुक्तेः। उपासकस्य सर्वकर्मविनिर्मोकावसरे कर्माधीनप्रकृतिप्राकृतसर्वसम्बन्धनिवृत्तिर्हि तत्र प्रतिपाद्या। अतोऽबाधितप्रत्यक्षविरोधे श्रुतेरेवान्यथानयनमित्येव सर्वसंमतम्। उक्तं हि "असंनिकृष्टवाचा हि द्वयमत्र जिहासितम्। ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा।।" इति। वस्तुतस्तु प्रपञ्चमिथ्यात्वं श्रुतौ न कुत्रापि श्रूयते। प्रत्युत तद्वैपरीत्येन प्रपञ्चसत्यत्वमेव बहुतरमुपलभ्यते। नहि "सदेव" इत्यादिवाक्यं प्रपञ्चमिथ्यात्वावगमकं, इदं सदात्मनाऽऽसीदित्युक्ते प्रपञ्चसत्यत्वमेव हि सिद्ध्येत्। निषेधश्रुतीनां तु प्रपञ्चभेदनिषेधपरत्वं सुतरां न संभवतीति पूर्वभागे निपुणं निरूपितमेव। नच तर्हि अनुमानमेव

तदवगमकमस्त्विति वाच्यम्। अनुमानस्य प्रत्यक्षमूलकत्वेन दौर्बल्यात् अनन्यथासिद्धप्रत्यक्षाविरोधेनैव प्रामाण्यात्। अपिच "विमतं मिथ्या दृश्यत्वात्" "पटादयोऽपरमार्थाः व्यावर्तमानत्वात्" इत्याद्यनुमानानि चानैकान्त्यादिदोषदूषितत्वात् नार्थसाधकानीति शतदूषण्यादौ निपुणं प्रत्यपादि आचार्यसार्वभौमैः। इह चोपरि यथावसरमुपपादयिष्यामः॥

यदपि चोक्तं (६०-पु) ब्रह्मणोऽज्ञानं नाम तस्य सद्वितीयत्वमेव, तच्च ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानेन निवृत्तमेव। अद्वितीयस्वरूपं तु स्वप्रकाशमवतिष्ठते इत्यद्वैत्युक्तौ, अद्वितीयस्वरूपे ब्रह्मणि स्वयं भासमाने सति तद्विरुद्धसद्वितीयत्वाज्ञानं वा कथं घटताम्, कथं वा तद्बाधश्चेत्याक्षेपे, "सद्वितीयत्वं ब्रह्मणि कल्प्यते। सद्वितीयत्वबाधश्च ब्रह्मस्वरूप एव। नातिरिक्तः। अतिरिक्तत्वेऽपि वा सुतरा सद्वितीयत्वबाधोपपत्तिः। विषमसत्ताकयोर्भावाभावयोरविरोधेन सद्वितीयत्वतद्बाधयोर्न काचिदनुपपत्तिः"इत्यादि। तत्सर्वं श्रीभाष्यश्रीसूक्त्यर्थापरिज्ञानमूलम्। ब्रह्मस्वरूपे स्वयंप्रकाशमाने सति तद्विरुद्धतदज्ञानं कथमाश्रयेदिति प्रथमानुयोगे अज्ञानमकल्पितमिति नहि श्रीभाष्यकारा अभिप्रयन्ति। विरोधिनि भासमाने कथमज्ञानं कल्पतामिति हि भाष्याभिप्रायः। तद्वदेवात्रापि अद्वितीयत्वस्वरूपे तस्मिन् स्वयं भासमाने तद्विरुद्ध सद्वितीयत्वं कथं कल्प्यत इत्याक्षेपे "कल्प्यते" इति कोऽयं परिहारः?। किञ्च—सद्वितीयत्वाज्ञानं तद्बाधश्च कथमित्यत्रापि तयोर्विरोधो नाशङ्कितः, येन "विषमसत्ताकयोर्भावाभावयो"रित्यादिभवत्परिहारकथनं युज्येत। किन्तु-अज्ञानं कथं कल्पतां, कल्पिते ह्यज्ञाने तद्बाधप्रसक्तिरित्येवार्थः। इत्थञ्च अद्वितीयस्वरूपे ब्रह्मणि स्वतो भासमाने तत्र तद्विरुद्धसद्वितीयत्वाज्ञानं न घटते। अज्ञानाप्रसक्त्या तद्बाधश्चाप्रसक्त एवेत्येतत् दुरुद्धरमेव भवताम्॥

किञ्च–सद्वितीयत्वं कल्पितमित्यपि दुर्वचम्। कल्पनं ह्यज्ञानमूलम्। शुद्धचैतन्यस्याज्ञानाश्रयत्वे उपपन्ने सद्वितीयत्वकल्पना संभाव्येत। तदेवानुपपन्नमिति हीदानीमुच्यते। अपिच सद्वितीयत्वबाधस्य ब्रह्म-स्वरूपत्वे सद्वितीयत्वकल्पनात्पूर्वमेव तद्ध्वंसप्रतीत्यापत्तिः। प्रतियोगि-नाशानन्तरं हि तन्नाशप्रतीतिर्लोकप्रसिद्धा। नच जीवादेरनादित्वेन सद्वितीयत्वमनादीति वाच्यम्। जीवादेः स्वरूपानादित्वे कल्पितत्वानु-पपत्तिः, प्रवाहानादित्वे कृतहानाकृताभ्यागमादिदोषापत्तिरित्यादिना पूर्वमेव जीवानादित्वस्य निरस्तत्वात्। सद्वितीयत्वबाधस्य ब्रह्मव्यतिरिक्तत्वे तादृशबाधः सुतरां बाधित एव। तत्त्वज्ञानेन जायमानोऽयं सद्वितीयत्वबाधः ब्रह्मव्यतिरिक्तश्चेत्–स किं सत्यो मिथ्या वा?। आद्येऽपसिद्धान्तः। अन्त्ये तत्त्वज्ञानवैयर्थ्यम्। तत्त्वज्ञानानन्तरमपि चेत् सद्वितीयत्वबाधो मिथ्याभूतोऽस्ति, तदा जगतोपि मिथ्याभूतस्य सत्त्वाङ्गीकारे विरोधा-भावात् तन्निवृत्त्यर्थप्रयासोऽनपेक्षित एव हि। विषमसत्ताकयोर्भावा-भावयोरविरोधेन कस्याश्चिदप्यनुपपत्तेरभावेऽज्ञानतत्कार्यादिशुद्धचैतन्ययोरपि त्वदुक्तरीत्या विषमसत्ताकत्वात् अविरोधेन सत्त्वे बाधकाभावादज्ञान-तत्कार्यादिनिवृत्तिप्रयासव्यग्रता भवतां भवदीयानां च व्यर्थैवापद्यते॥

अत्र (६१–पु) अभियुक्तोक्त्युदाहरणम्—

“अखण्डाकारनिष्पन्ना शब्दवृत्तिरहंगता।
व्यञ्जयन्ती चिदात्मानं स्वयमप्युपशाम्यति॥

सविकल्पावभासात्मा तया वृत्त्योपरञ्जितः।
चिदात्मा भासतेऽथापि केवलः परिशिष्यते॥

भावाभावविशेषाणामविशेषनिषेधतः।
स्वात्मनोऽपि निषेधेन सा हि वृत्तिर्विकल्पिता॥

ततस्तदुपरागेण तां वृत्तिमवभासयन् ।
तन्निषेधावसानत्वात्स्वयमेवावभासते ॥

प्रागतस्स्वप्रकाशोऽपि भासमानोऽपि सर्वदा ।
नाविद्याग्रस्तनिर्भासश्चिदात्मा निरुणद्धि ताम् ॥
प्रमावृत्तिचिदाभासा संविद्ध्यस्या विरोधिनी ॥" इति ॥

तदिदमेवं प्रत्युच्यते—

१. अहंगता शब्दवृत्तिरखण्डाकारभाक् कथम्? ।
कथञ्च व्यञ्जयेदेषा चिदात्मानं स्वयं जडा ॥

२. अविद्याकल्पिता वृत्तिः कथं शुद्धावभासिका ।
शुद्धात्मानमविद्या हि नाश्रयेन्न च भासयेत् ।

३. विनाऽविद्यामविद्यावत् वर लोकप्रकल्पनम् ।
एवं मिथःसंश्रयणात् शुद्धेऽज्ञानं न कल्पते ॥

४. समग्रे चित्स्वरूपे च भासमाने विरोधिनि ।
कथङ्कारमविद्या स्यात् कथं चाभिभवेदिदम् ॥

५. निषेधकनिषेधश्च न सिद्ध्येत्कारणं विना ।
तथा चेदस्तु सर्वेषां निषेधो निर्निषेधकः ॥

६. "वृत्त्यारूढा संविदेव ह्यविद्यानाशिके"ति यत् ।
तन्नोपपद्यते यस्मात् विषयो नातिरिच्यते ॥

७. बाध्यवत् बाधकस्यापि बाध्यत्वं यदि वर्ण्यते ।
बाध्यबाधकभावोऽपि मिथ्या, तत् सर्वसत्यता ॥

८. द्वयोर्जीवब्रह्मणोरप्यविद्यानाश्रयत्वतः ।
आश्रयानुपपत्तिस्सा प्रथमा सुप्रतिष्ठिता ॥ इति ॥

इत्थं जीवो वा ब्रह्म वा अविद्याया आश्रयो भवितुं नार्हतीति आश्रयानुपपत्तिर्भवतां दुष्परिहरेति सिद्धम्॥

जीवस्य ब्रह्मणश्चैव नाविद्याश्रयता भवेत्।
अन्योन्याश्रयदोषाच्च परस्परविरोधतः॥

॥इति प्रथमः परिच्छेदः॥

---

॥ द्वितीयः परिच्छेदः—तिरोधानानुपपत्तिः॥ (२)

१. प्रकाशस्य तिरोधानं तदुत्पत्तिनिरोधनम्।
तस्योत्पन्नस्य नाशो वा नान्यथा संभवेत् ततः॥

२. प्रकाशैकस्वरूपस्य नित्यस्य ब्रह्मणः कथम्।
तादृशं तत् भवेत् तत्, तत्तिरोधिर्नोपपद्यते॥

३. अन्यादृशतिरोधानपरिष्कारस्त्वनर्थदः।
इत्यादिकं सर्वमत्र विस्तरेण निरूप्यते॥

नित्यशुद्धमुक्तस्वप्रकाशचैतन्यरूपं ब्रह्म अविद्याख्याज्ञानेनावृतं सत् जीवभावादिकं भजत इत्यद्वैतिनः।

तत्र वस्तुनि प्रकाशमाने तत् वस्तु केनचिदन्येनाऽऽव्रियत इति चेत्—तत्रावरणं नाम वस्तुविषयकप्रकाशस्य नाश इति, तद्वस्तु-विषयकप्रकाशप्रतिबन्ध इति वा वक्तव्यम्। प्रकृते स्वप्रकाशस्वरूप ब्रह्माऽविद्याऽऽवृतमित्युक्तौ, अनादेः प्रकाशरूपस्य ब्रह्मणः उत्पत्त्यभावादुत्पत्तिप्रतिबन्धरूपावरणासंभवात् प्रकाशनाशरूपावरण-मेवाङ्गीकार्यमिति प्रकाशरूपब्रह्मण एव नाशप्रसङ्ग इति ब्रह्मणोऽज्ञान-तिरोधानानुपपत्तिरुद्घाटिता श्रीभाष्यकारैः॥

एवं श्रीभाष्यकृदापादितामज्ञानतिरोधानाऽनुपपत्ति वारयितुं स्वप्रकाशस्वरूपब्रह्मणोऽज्ञानतिरोधानं साधयितुं च (६१-६२-पु)

यदुक्तं, "न प्रकाशप्रतिबन्धनाशान्यतरस्यावरणशब्दार्थत्वमङ्गीकुर्मो वयमद्वैतिनः। किंतु "अस्ति, प्रकाशते" इति व्यवहारसामग्र्यां सत्या "नास्ति,न प्रकाशत" इत्याकारकव्यवहारयोग्यतापादनमेवाऽऽवरणशब्दार्थः इत्येवास्माकीनस्सिद्धान्तः। यद्यपीदमावरणलक्षणं घटचाक्षुषप्रत्यक्षे घटावरणत्वेन लोकप्रसिद्धे तमसि न समन्वेति। नह्यालोकादिघटित घटप्रत्यक्षसामग्र्या सत्यामसत्यां वा घटे तादृशव्यवहारयोग्यतामापादयितुं तमः शक्नुयात्। आलोकसदसद्भ्यामेवान्यथासिद्धेः। तथापि— घटावारकत्वाभिमततमआदिविरोध्यालोकादिव्यतिरिक्तास्तित्वादिव्यवहार-सामग्र्यां सत्या नास्त्यादिव्यवहारयोग्यतापादनमावरणमिति लक्षण-परिष्कारोऽभिप्रेतः। अतोऽत्र घटावारके तमसि लक्षणसमन्वयः।" इत्यादि॥

अत्रोच्यते — प्रकाशप्रतिबन्धनाशान्यतररूपलोकप्रसिद्धाऽऽवरण-शब्दार्थपरित्याग एव भवत्पक्षदौर्बल्यादिकमावेदयति। स्वकपोल-मात्रकल्पितावरणलक्षणपरिष्कारेणापि वा किं भवन्मतं परिरक्षितं भवतीति विमृशामः। महता प्रयासेन तमसि संभावनीयतया भवत्परिष्कृतमपीदमावरणलक्षणं तत्र नतरां घटते। "यद्वे"त्युपरि पक्षान्तरोपक्षेपादयं प्रथमपक्ष इति ज्ञायते। अत्र पक्षे आलोकस्य घटचाक्षुषप्रत्यक्षसामग्र्यामन्तर्भावः भवताऽङ्गीकृत इति स्पष्टम्। एवं सति भवता स्वैरं आवरणलक्षणे, तमआदिविरोध्यालोकादिव्यतिरिक्तेति परिष्कृतेऽपि आलोकासमवधानकालीनतादृशव्यवहारयोग्यतापादकत्वमव-श्यापेक्षितसामग्र्यन्तर्गतालोकाभावस्यैव, न भवदभिमतस्य तमसः। आलोकः सामग्रीघटक एव ह्यत्र पक्षे। तमश्चालोकाभावातिरिक्तमेव, "तमसश्च भावान्तरत्वात्" इति भवतैवात्रैवाभिमन्यते। तथाच तमस्साधारणतया भवत्कृतावरणलक्षणपरिष्कारप्रयासः सर्वोऽपि केवलं श्रमफल एवेति स्पष्टम्। किञ्च—(अक्ष्णा) काणत्वमपि घटाद्यावारकं

भवेत्। काणत्वविरोधिचक्षुरितरसामग्र्यां सत्यां नास्त्यादिव्यवहारापादकत्वं काणत्वस्यैवेति भवदुक्तलक्षणसमन्वयसंभवात्। नच—लोके न तत् आवारकत्वेनाभिमतमिति वाच्यम्। तर्हि लोकदर्शनरीत्यैव आवरण-शब्दार्थाङ्गीकारापत्तेः। अपिच तमःसमवधानेऽपि वस्तुनोऽभावा-भावात् नास्तीति कथं व्यवहारः? । न दृश्यत इति तु स्यात्। अदर्शनव्यवहारं प्रति अदर्शनमेव कारणम्, न तमः। अदर्शनं प्रति तमः कारणं चक्षुःसन्निकर्षविघटनात्। प्रकृते च स्वप्रकाशे वस्तुनि तमोवत् अविद्यया क्रियमाणं किं, येन अदर्शनं भवेत्। दर्शनञ्च प्रकाशः। न च स नास्तीत्यलम्॥

किञ्च—यद्वेत्यनेन लोकप्रसिद्धघटादिचाक्षुषसामग्र्यन्तर्गतालोका-दीनां तत्सामग्रीबहिर्भावः अङ्गीक्रियते भवता। सर्ववादिसंमतविरुद्ध-मिदम्। अत्र च हेतूपन्यासः, "अन्धकारनिवृत्त्याऽन्यथासिद्धत्वात्" इति। इदमप्यनुपपन्नम्। तमो नाम किञ्चिन्नास्तीति नैयायिकाः। तमो नाम द्रव्यमस्तीति वयम्। इत्थं सत्यन्धकाराभावस्य विप्रति-पन्नस्य सामग्र्यन्तर्भावापेक्षया सर्ववादिसंप्रतिपन्नालोकस्यैव तत्त्वौचित्यात् अन्धकारनिवृत्त्याऽन्यथासिद्ध्युक्तिरसमीचीनैव। इदं च पञ्चमान्यथा-सिद्ध्युपासने भवता स्फुटं भवेत्। किञ्च आलोकान्धकारनिवृत्त्योर्मध्ये अन्धकारप्रतियोगिकनिवृत्तेः कारणत्वापेक्षया लाघवेनाऽऽलोकस्यैव कारणत्वमुचितमिति नान्धकारनिवृत्त्याऽन्यथासिद्धिशंकावकाशः। इत्थञ्च, आलोकस्य घटादिचाक्षुषसामग्र्यन्तर्भावस्यावर्जनीयतया पूर्वोक्तरीत्या तमस्यावरणत्वं दुरुपपादमिति दृष्टान्ते आवरणशब्दार्थदौर्घट्यमेतावता उपपादितम्। इतो दार्ष्टान्तिके तदुपपादयामः। स्वप्रकाशस्वरूपस्य ब्रह्मणः 'अस्ति प्रकाशत' इति व्यवहारसामग्र्यां सत्यां, 'नास्ति न प्रकाशत' इति व्यवहारयोग्यतापादकमज्ञानम्। तच्च प्रमाणज्ञानान्निवृत्तं

चेत् ब्रह्म स्वरूपेणावभासते—इति हि भवदभिमतिः। शुद्धब्रह्मणः 'अस्ति, प्रकाशते'व्यवहारसामग्री का?। न हि तदा तिरोधानात्पूर्वं ब्रह्मव्यतिरिक्तसामग्री काचिद्वक्तुं शक्यते। ब्रह्मैव सामग्रीति वाच्यम्। तथा चेत् — आलोकेन तमसो निवृत्तौ यथा पूर्वसंपन्नसामग्र्या घटविषयकः 'अस्ति, प्रकाशते' इति व्यवहारो भवति, तथाऽत्रापि प्रमाणज्ञानादज्ञाननिवृत्तौ पूर्वसिद्धसामग्र्या अस्त्यादिव्यवहारापत्तिः। न चेष्टापत्तिः— अविद्यानिवृत्त्यनन्तरमविद्याकार्यताद‍ृशव्यवहारासंभवात्। अस्त्यादिव्यवहारस्य ब्रह्मविषये कदाप्यसंभवे ताद‍ृशव्यवहारसामग्रीत्वमेव भग्नं स्यात्। तथाचात्र ब्रह्मविषये अस्त्यादिव्यवहारसामग्र्यां सत्यामित्येव वक्तुं न शक्यत इति सिद्धम्। किञ्च— अज्ञानेन ब्रह्मण आपाद्यमानं नास्त्यादिव्यवहारयोग्यत्वं नाम किम्?। लोके हि सर्वत्र विधिनिषेधादिरूपव्यवहारयोग्यत्वं ज्ञानविषयत्वमेव द‍ृश्यते। नह्यज्ञात्वा कश्चित्पदार्थं कश्चित्प्रभवेत् व्यवहर्तुम्। अर्थं बुद्ध्वैव हि व्यवहरति। प्रकृते च ब्रह्मणः तिरोधानात्पूर्वं ज्ञानविषयत्वं कथं घटेत। ज्ञानस्यैव तदानीमभावात्। ब्रह्म तु ज्ञानरूपं सार्वदिकमिति तन्न प्रकृतोपयुक्तम्। स्वरूपज्ञानं चेत् नास्त्यादिव्यवहारप्रयोजकं, तदा स्वविषयत्वपर्यवसायिताद‍ृशव्यवहारयोग्यत्वरूपं तिरोधानं मुक्तावप्यस्तीति तत्राप्यावरणाऽनमोक्षप्रसङ्गः। किञ्च—नास्त्यादिव्यवहारयोग्यत्वं ब्रह्मस्वरूपे प्रकाशमाने विरुद्धत्वात् वक्तुमशक्यं च। ततश्च ताद‍ृशव्यवहारयोग्यत्वमेव निर्विशेषस्वरूपस्य दुरुपपादम्। अपिच— तद्योग्यत्वं किं काल्पनिकं, उत तात्त्विकम्। नाद्यः— तस्य तिरोधानानन्तरभावित्वात्। नान्त्यः—अद्वैतहानेः। योग्यत्वं ब्रह्मैव इति चेत्—तस्याज्ञानापाद्यमानता न घटते। एवं च दार्ष्टान्तिकेप्यज्ञाने भवत्कल्पितावरणलक्षणं न कथञ्चिदपि समन्वेतीति सिद्धम्। अधिकं परमार्थभूषणादावनुसन्धेयम्॥

यच्चाऽत्रैव (६२–पु) "नच प्रकाश इत्येतावतैवाऽऽवरणासंभवः। अस्ति खलु सर्वेषा 'अहमिदं न जानामि' 'आत्मानं न जानामि' इति प्रकाशमानेप्यज्ञाततानुभवः। स च साक्षिसिद्धः। ननु साक्ष्यनुभवसिद्धमप्यज्ञानमनुपपन्नमेवेति चेत्–अत एवानिर्वचनीयमित्युच्यते"इत्याद्युक्तम्। तदपि स्वविपरीतसाधनं न जानन्ति भवन्तः। स्वप्रकाशस्वरूपे ब्रह्मणि, अज्ञानाश्रयत्वे प्रमाणतया भवदुपन्यस्तेन "अहमिदं न जानामि, आत्मानं न जानामि"-इत्याद्यनुभवेन यथाऽज्ञातता सिद्ध्यति, तथा, "अहं जानामि" इत्याद्यनुभवानुरोधेन ज्ञातताप्यङ्गीकरणीयैवेति सिद्ध्येदेव। यदि ज्ञातृत्वमहङ्कारस्यैवेत्युच्यते, तर्ह्यज्ञानाश्रयत्वमप्यहङ्कारस्यैव सिद्ध्येत्। न तु ब्रह्मणः। उभयत्र अहमित्येव तुल्यानुभवात्। किञ्च– "प्रकाशमानेप्यज्ञाततानुभवः" इति भवदुक्तेः कोऽर्थः?। अनर्थकमेवैतद्वाक्यम्। न हि ब्रह्मणि प्रकाशविषयतदविषयाकार-द्वयमङ्गीक्रियते भवद्भिः। निर्विशेषत्वात् ब्रह्मणः। प्रकाशमानत्वमज्ञातत्वं चेति द्वयं विरुद्धमेव। अपि च, "अनुपपन्नत्वादेवाज्ञानमनिर्वचनीय-मित्यभ्युपगच्छामः" इत्यप्यसङ्गतम्। अनुपपन्नत्वेनैव निर्वक्तु शक्यत्वात्। स्वावसरे विस्तरो भविष्यति। नास्त्यादिव्यवहारयोग्यत्वं यथा ब्रह्मणो न संभवति, तथैव पक्षान्तरतयोपक्षिप्तं अस्त्यादिव्यव-हाराऽयोग्यत्वमपि न संभवत्येव। तद्धि ज्ञानसम्बन्धाभावरूपमेव वाच्यम्। अज्ञातमेव ह्यव्यवहार्यं भवेत्। ज्ञातं तु इच्छायां सत्यां व्यवहार्यं भवेत्। नचेन्न तथा। स च ज्ञानसम्बन्धाभावः ब्रह्मणि कथमपि न सभवेत्। स्वप्रकाशत्वेन स्वविषयकत्वात्तस्य। ज्ञानरूपस्य तु ब्रह्मणः ज्ञानान्तरसम्बन्धः भवन्मते अप्रसक्तः शशशृङ्गायमाण इति तदभावरूपव्यवहारायोग्यत्वस्य ब्रह्मणि मुक्ति कालेऽपि सत्त्वात् तत्राप्यज्ञानानिर्मोक्षप्रसङ्ग एव॥

यदत्र (६२-पु) ब्रह्मण्यज्ञानसाधनविषये संक्षेपशारीरकोदाहरणम्—

"अज्ञाततापि घटतेऽत्र दृशोऽनुभूतेः
जानामि नाहमिति दृश्यपि दृश्यते हि।
अज्ञातताऽनुभवनं न च वास्तवं तत्
अज्ञाततोद्वहति कल्पिततां हि तस्याः॥" इति,

तदिद्—

ज्ञातृत्वमेव यदि नास्ति दृशोऽनुभूतेः
अज्ञाततापि सुतरां न घटेत तर्हि।
जानामि नाहमितिवत् भवति प्रतीतिः
जानामि चेति दृशि तद् द्वयमप्युपेयम्॥

इत्येवमपास्तं ज्ञातव्यम्॥

यच्चात्र (६३-पु) "इदं चावरणं स्वरूपतः सदा प्रकाशमानस्यापि शुद्धचैतन्यस्य 'परिपूर्णं ब्रह्म नास्ति न प्रकाशते' इति व्यवहारात् परिपूर्णत्वाद्याकारेणाप्रकाशमानत्वात्तत्राऽऽवरणकल्पने न किमपि बाधक"मित्याद्युक्तम्। नूनमिदमात्मनोऽद्वैतितां निर्विशेषब्रह्मतां च विस्मृत्य, "अवशाः प्रतिपेदिरे"न्यायात् भाषणमिति मन्यामहे। लोके च तत्त्वमनिर्धारयतामेवमेव व्याहतभाषित्वं पश्याम एव हि। किं भवन्मते ब्रह्म अनेकविभागवत्? येन परिपूर्णमपूर्णमित्यादिभाषणं सामञ्जस्यं लभेत। तिरोधाननिवृत्तौ परिपूर्णं ब्रह्म प्रकाशत इति हि भवदभिमतिः। इदानीं प्रकाशमाने ब्रह्मणि योंऽशः प्रकाशते, इतोऽधिकोंऽशः कः प्रकाशमेष्यति मुक्तौ। प्रकाशते चेत् पूर्णमेव प्रकाशते, नचेन्न प्रकाशत एवेत्येव वक्तव्यम्। अतः परिपूर्णत्वादिवचनं न केवलमपरिपूर्णं, सर्वथा व्याहतार्थमेव। प्रत्युत मुक्तौ ईषदपि व्यवहाराभावात् तदैव परिपूर्णोऽप्रकाशः स्यात्॥

किञ्च—"स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि प्रमाणप्रतिपन्नसार्वज्ञ्यसर्वशक्त्यादिगुणनिधेः परमपुरुषस्य परस्य ब्रह्मणः, "अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति गीताचार्योक्तरीत्या संसारे मोमुह्यमानैः कैश्चिदज्ञानावरणवादोऽयं सूत्रकाराशयविरुद्ध इति स्पष्टम्। स्वामार्थानां जीवकर्तृकत्वशंकायां, जीवीयसत्यसंकल्पत्वादीनां पराभिध्यानात्–परमपुरुषसंकल्पात्, तिरोहितत्वात्–तेषा न जीवकर्तृकत्वं संभवति। जीवस्य बन्धो वा, तद्विपर्ययः—मोक्षो वा परमपुरुषसंकल्पादेव हि। तत्रास्य जीवस्य बन्धो नाम "स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तौ वक्ष्यमाणत्वात् सत्यसंकल्पत्वादिस्वस्वरूपतिरोधानादिकमेव हि। ततश्च जीवबन्धस्य परमपुरुषसंकल्पायत्तत्वात् बन्धान्तर्गतसत्यसंकल्पत्वादितिरोधानमपि तदायत्तमिति किंपुनर्न्यायसिद्धम्।—इति जीवकर्तृकत्वशंकां निरसिसिषुणा भगवता सूत्रकारेण, "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इत्यसूत्र्यत। अनेन च सूत्रेण, 'परः—परमपुरुषः अन्यः सगुणश्च, अयं—जीवोऽन्यः, अस्य च स्वाभाविकं रूपं परसंकल्पात् तिरोहितम्। ब्रह्मणो बन्धो वा मोक्षो वा नास्ति। जीवस्यैव तौ परायत्तौ' इत्येवमादयोऽर्थविशेषाः स्पष्टं प्रतीयन्ते। अस्य च सूत्रस्य, "पराभिध्यानात्, तु, तिरोहितं, ततो हि, अस्य, बन्धविपर्ययौ" इति यथापदविन्यासं व्याख्यामकृत्वा, "तिरोहितं जीवे ईश्वरसमानधर्मत्वं, पराभिध्यानात्–परमेश्वराभिध्यानात् आविर्भवति" इत्यादिपरव्याख्यानं व्युत्क्रमान्वयाध्याहारादिना दुष्टमिति स्पष्टम्। अत्र विषयेऽधिकं श्रुतप्रकाशिकायामनुसन्धेयम्। एवमत्र सूत्रकाराशये स्पष्टं प्रतीयमाने, तद्वैपरीत्येन, "ब्रह्म एकमेव, तदेवाज्ञानेनावृतं सत् जीवभावमनुभवति। तदेव बध्यते, मुच्यते च" इत्यादिकल्पनमसौत्रमत एवावैदिकं चेति विज्ञेयम्॥

यदप्यत्रैव (६३-पु) "एतेन प्रकाशमाने वस्तुनि अज्ञानावरणं न संभवतीति वादः परास्तः। अपवरकालोकादौ अन्धकारारोपवत् अस्याप्यारोपसंभवात्। त्वदुक्तमर्थं न जानामीति प्रकाशमान एव अप्रकाशमानत्वानुभवाच्च बाह्यविषयेऽपि प्रकाशमानस्याप्रकाशमानत्वं प्रसिद्ध"मित्याद्युक्तम्। तत्सर्वं पूर्वमेवापवरकालोकान्ध्यदृष्टान्तदूषणेन दूषितम्। अत्रैव भवतैव, "आलोकतमसोर्यादृशो विरोधः न तादृश एवाज्ञानचैतन्ययोः। प्रकाशमाने चैतन्येऽज्ञानानुभववत् आलोके तमोनुभवाभावात्" इत्येवं आलोके तमोनुभवः प्रतिषिद्धः। वस्तुतस्तु अपवरकालोके नान्धकारारोपः। किन्तु अधिकतरालोक-परिचितिमता चक्षुषा सद्यः अपवरकप्रवेशे तत्रत्याल्पतरालोकग्रहणमेव संभावितम्। एतच्च पूर्वमुपपादितमेव। अहमात्मानं न जानामीति, त्वदुक्तमर्थं न जानामीति चानुभवो भवत्येव लोके सर्वेषाम्। कथमयमनुभवो निर्वाह्य इत्येवेदानीं विचारविषयः। 'अहं'मिति स्फुरणात् आत्मनो ज्ञातत्वमवश्याऽभ्युपगमनीयम्। आत्मानं न जानामीति चात्मनोऽज्ञातत्वम्। कथमत्र निर्वाहः?। केनचिदाकारेण ज्ञातत्वं, आकारान्तरेणाऽज्ञातत्वमित्येव साधीयः। किममुं जानासीति, प्रत्यक्षतो दृश्यमानमेव पुरुषं कञ्चिन्निर्दिश्य केनचित्कश्चित्प्रत्यनुयोगे, न जानामीति चेत्स वदेत्, कथं तत्र प्रत्यक्षतो दृश्यमानस्य पुरुषस्याज्ञातत्वम्?। पुरोवर्तित्वादिरूपेण जानामि। कस्य पुत्रः, किंनामेत्याद्याकारेण न जानामीत्येव हि तत्र स्वरसो निर्वाहः। त्वदुक्तमर्थमित्यादावपि सामान्यविशेषाभावकुसृतिमवकल्प्य स्वयम-काण्डताण्डवकरणमुपहास्यमेव। किं बाह्यविषयोऽपि ब्रह्मेव निर्विभागः त्वन्मते, येनेयं कुसृतिस्तत्रापि प्रसजेत्। बाह्यविषयाणां सविशेषत्वात् केनचिद्विशेषेण युक्तस्य ग्रहणेऽपि केनचिद्वियुक्तस्याग्रहणसंभवात् भवति प्रतीतिः "त्वदुक्तमर्थं न जानामी"त्यादिका। निर्विशेषे तु ब्रह्मणि

नायं प्रकारो घटते। तथाच सविशेषत्वमन्तरा भवदभिमतब्रह्मविषये 'प्रकाशते, न प्रकाशते' इत्येतदुपपादयितुं न केनाप्यनुन्मत्तेन शक्यम्॥

यदपि चात्रैव (६३–पु) उक्तम्—"प्रमाणज्ञानमाविद्यकमपि अज्ञाननिवर्तनक्षममेव। नहि ज्ञानं स्वरूपसत् निवर्तकं, तथात्वे भ्रमस्यापि बाधकत्वप्रसङ्गात्। सत्यविषयकत्वेनैव निवर्तकत्वं ज्ञानस्याङ्गीक्रियते। प्रकृते च सत्यब्रह्मविषयकत्वेन प्रमाणज्ञानमज्ञाननिवर्तकं भवितुमर्हति। तच्च प्रमाणज्ञानं, अज्ञानं तत्कार्यं चाशेषं विनिवर्त्य, आविद्यकत्वात्स्वयमपि दग्धेन्धनानलवन्निवर्तते" इत्यादिकम्। एतच्च सर्वं स्वोक्तिव्याघातादिना परास्तम्। पूर्वं, (५७–५८ पु) भवतैव, ज्ञानस्य निवर्तकत्वं कारणविशेषनिबन्धनज्ञानगतविशेषादेव, नतु विषयविशेषात्" इत्यादिकमाकृष्टम्। इदानीमत्र, न हि ज्ञानस्य स्वरूपेण निवर्तकत्वं, विषयसत्यत्वेनैवेत्युच्यते। किमिदमव्यवस्थितभाषणम्। प्रमाणवृत्त्युपारूढत्वे विषयसत्यत्वमेव हि मूलं वक्तव्यम्। ततश्च भ्रमस्य विषयसत्यत्वाभावात् न निवर्तकत्वं, प्रमाणज्ञानस्य सत्यविषयकत्वेनैव तत्त्वमित्येव फलति। एवंचेत्, स्वरूपचैतन्यस्य ईदृशसत्यविषयकत्वमस्ति चेत् तस्यैव निवर्तकत्वापत्तिः। नास्ति चेत् ब्रह्मणोऽसत्यत्वमापद्येत। किञ्च—अज्ञानादिकं नाशयित्वा स्वयं च तत् प्रमाणज्ञानं दग्धेन्धनानलवत् नश्यतीत्युक्तौ अग्नेराश्रयनाशकत्ववत् अस्यापि प्रमाणज्ञानस्य स्वाश्रयब्रह्मनाशकत्वमापद्येत। यत्र हि निवर्त्यमज्ञानमाश्रितं, तत्रैव हि निवर्तकं ज्ञानमाश्रितमिति वक्तव्यम्। नाश्यनाशकयोः सामानाधिकरण्यावश्यंभावात्। अन्यथा चैत्रज्ञानेन मैत्राज्ञाननिवृत्त्यापत्तेः। वस्तुतो वह्नेः स्वनाशकत्वमेव तत्र नास्तीत्यादिकमधिकं स्वावसरे उपपादयामः॥

यदत्र (६४–पु) "स्वरूपतोऽज्ञानभासकस्यापि चैतन्यस्य वृत्त्यवच्छेदेन विरोधित्वे बाधकाभावात्। नहि येन रूपेण भासकत्वं,

तेनैव रूपेण विरोधित्वमिति कुलधर्मः। भासकसूर्यस्य सूर्यकान्तावच्छेदेन दाहकत्वदर्शनात्" इत्यादिकमुक्तम्। तदपार्थम्। दृष्टान्तवैषम्यं च। अज्ञानभासकत्वं चैतन्यस्य स्वरूपप्रयुक्तमिति चेदभ्युपगम्यते, स्वरूपनित्यत्वेन मुक्तावपि अज्ञानभानानिवृत्तिप्रसङ्गो दुरुद्धर एव। किञ्च — शुद्धचैतन्यस्याज्ञानावभासकत्वमिव प्रपञ्चावभासकत्वमेवास्त्विति अज्ञानकल्पनावैयर्थ्यप्रसङ्गश्च। वृत्त्यवच्छेदेन विरोधित्वं च न सङ्गच्छत इति निपुणमुपपादितमधस्तादस्माभिः। अनुपपन्नमेवाङ्गीकरणीयमिति युष्माकं कुलधर्मे सत्यपि नहि प्रामाणिकपरीक्षकलोकस्य स कुलधर्मः। दृष्टान्तेपि सूर्यस्य न भासकत्वं, ज्ञानस्यैव हि तत्। भाने तस्य सहकारित्वमेव। अन्यथाऽन्धजडादीन् प्रत्यपि तस्य भासकत्वप्रसङ्गात्। आलोकः सहकारिकारणमिति हि प्रामाणिकलोकमर्यादा। किञ्च—नहि भवदभिमतनिर्गुणब्रह्मवत् सूर्यो निर्गुणः, येन भवदुक्तरीत्या भासकत्वं तस्य स्वरूपप्रयुक्तं स्यात्। तथाच दृष्टान्तवैघट्यं च दुर्वारमेव॥

यदपि चोक्तमत्रैव (६४-पु) "वस्तुतस्तु निवर्तकज्ञानस्याज्ञानविरोधित्वं न तन्नाशजनकत्वम्। तन्नाशस्य नाश्यत्वानाश्यत्वयोरनवस्थासत्यत्वयोः प्रसङ्गात्। किन्तु अज्ञानाधिकरणकालपूर्वत्वानधिकरणक्षणवृत्तित्वमेव। एवंच प्रमाणजन्याखण्डाकारमनोवृत्त्याऽऽत्मतत्त्वावभासे बाध एवाऽज्ञानादेः" इति। तदिदं दुरुपपादम्। तत्त्वज्ञानेनाऽविद्यानाशो नाङ्गीक्रियत इत्येतत् भवदीयसूत्रभाष्यतद्व्याख्याविरुद्धम्। "अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इति हि शाङ्करभाष्यम्। "अस्येति—कर्तृत्वाद्यनर्थहेतोरध्यासस्य समूलस्यात्यन्तिकनाशो मोक्षः। स केनेत्यत आह—आत्मेति" इति तत्र रत्नप्रभा। "एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः" इत्येतच्छाङ्करभाष्यव्याख्यावसरे च "ज्ञानं विना

ध्वंसाभावादानन्त्यम्" इति रत्नप्रभा। "एवमयमनादिरनन्तः—तत्त्वज्ञानमन्तरेणाऽशक्यसमुच्छेदः" इति तत्रैव भामती। "तत्त्वधिया विना सर्वात्मना नाशहानेरानन्त्यम्" इति तत्रैवानन्दगिरीयन्यायनिर्णयः। इत्थं भवत्पूर्वैरविद्यानाशजनकत्वं निवर्तकज्ञानस्याङ्गीकृतमिह भवता निषिध्यत इति विरोधः। किञ्च—अज्ञाननाशो यदि नाङ्गीक्रियते, तदा निवर्तकज्ञानस्य अज्ञानविरोधित्वपरिष्कारमात्रेणापि अविद्याऽनिवृत्त्या मुक्तावप्यज्ञानानुवृत्तिप्रसङ्गो दुर्वारः। निवर्तकज्ञानस्याज्ञानविरोधित्व-परिष्कारोपि भवदीयो न समीचीनः। अज्ञानाधिकरणकालपूर्वत्वा-नधिकरणक्षणवृत्तित्वमिति हि परिष्कारः। स च अज्ञानाधिकरणी-भूतान्तिमक्षणवृत्तित्वपर्यवसाय्येव। तादृशान्तिमक्षणस्याऽज्ञानाधिकरण-कालपूर्वत्वानधिकरणत्वमसंभाव्यमेव। अज्ञानस्य नाशानङ्गीकारेण उत्तरत्राप्यज्ञानानुवृत्तेरनिवार्यत्वात्। नच—तत्त्वज्ञानेनाज्ञानस्य बाधितत्वेन न तस्यानुवृत्तिसंभव इति वाच्यम्। बाधितस्याप्यनुवृत्तिसंभवस्य भवद्भिरुररीकृतत्वात्। अज्ञानविरोधित्वमज्ञानबाधकत्वमित्येवोक्तिसंभवात्। अथ तत्र बाधः सत्यो मिथ्या वेत्यपि विचार्यम्। किञ्च—तादृशान्तिम-क्षणोत्पन्नस्य कस्यापि अज्ञानाधिकरणकालपूर्वत्वानधिकरणक्षणवृत्तित्व-संभवेन तस्याप्यज्ञानविरोधित्वप्रसङ्गः। अपिच—निवर्तकज्ञानेनाज्ञानादेः बाधोपि दुरुपपाद एव। किं वृत्तिज्ञानस्याज्ञानबाधकत्वं वृत्तित्वेन रूपेण, उत तत्त्वप्रकाशत्वेन? आद्ये—दण्डनाश्यघटादेरिवाज्ञानादेरपि सत्यत्वप्रसंगः। अन्त्ये च—स्वरूपज्ञानस्यापि निवर्तकत्वापत्त्यादिकमनि-वार्यम्। अधिकं श्रीशतदूषण्यादावनुसन्धेयम्। इत्थंच स्वरूपज्ञानस्याज्ञान-विरोधित्वात् अज्ञानेन ब्रह्मस्वरूपतिरोधानमसंभाव्यमेवेति सिद्धम्॥

यदपि चात्रैव (६४-पु) स्वमते स्वयंप्रकाशस्यापि जीवात्मनस्तिरो-धानोपपत्तिप्रतिपादकश्रुतप्रकाशिकावाक्यार्थानुवादावसरे, "यद्यप्यात्म-स्वरूपस्फुरणं भ्रमविरोधीति वक्तुं शक्यते, तथापि शुक्तित्वादि-

विशेषाकारज्ञानस्यैव रजतभ्रमविरोधित्वदर्शनात् आत्मासाधारणाकार-ज्ञानस्यैव देहात्मभ्रमविरोधित्वमुच्यते" इत्यादिकमुक्तम्। तत्सव तद्वाक्यार्थानवबोधमूलमन्यथानुवादकं च। इत्थं हि तत्र श्रुतप्रकाशिका-श्रीसूक्तिः, "ज्ञानस्याऽऽत्मासाधारणाऽऽकारस्य स्फुरणात् भ्रमानुपपत्तिरिति चेन्न-तस्याऽसाधारणत्वास्फुरणात्। असाधारणतया स्फुरतो धर्मस्य हि भ्रमविरोधित्वं दृष्टम्। यथा शुक्तित्वादेः। शुक्तित्व हि शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चात् भ्रमं निवर्तयति" इति। किञ्च-आत्मस्वरूपस्फुरण न भ्रमविरोधीति च तत्रैव विस्पष्टमभिधीयते तैरेवाचार्यैः, "नच स्वरूपस्फुरण भ्रमविरोधि। किन्तु नित्य-त्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि। तान्यागमगम्यानि" इति। तथाच तत्र श्रुतप्रकाशिकायामात्मस्फुरणस्यैव भ्रमविरोधित्वं नैवाशङ्कितं, समाहितं च। तत्र श्रीश्रुतप्रकाशिकाश्रीसूक्तिग्रन्थार्थोऽयम्,—पराभिमतब्रह्मणो निर्विशेषत्वात् केवलप्रकाशरूपत्वात् तस्याऽज्ञानेन तिरोधानाभ्युपगमे तन्नाश एवाभ्युपगतः स्यात्। अस्माकं तु मते-जीवस्यैवाऽविद्याख्यकर्मसम्बन्धेन तिरोधानाभ्युपगमात्, तत्रापि जीवात्मस्वरूपे स्फुरत्यपि तदीयधर्मभूतज्ञानस्य द्रव्यत्वेन कर्मानुगुण-संकोचविकासरूपावस्थाद्वयाभ्युपगमात्, तत्र ज्ञानविकासाभावरूप-सङ्कोचस्यैव तिरोधानरूपत्वाङ्गीकारेण च जीवात्मस्वरूपनाशप्रसङ्गलेशोऽपि न प्रसज्यते। यद्यपि अहं जानामीत्यादौ आत्मनस्तदसाधारणधर्म-भूतज्ञानस्य च स्फुरणात् शुक्त्यसाधारणभूतशुक्तित्वेन शुक्तिग्रहणे रजतभ्रमस्येव देहात्मभ्रमस्यानुपपत्तिश्शक्यशङ्का, अथापि शुक्तित्वस्यापि असाधारण्याग्रहणे भ्रमदर्शनात् प्रकृतेऽपि धर्मभूतज्ञानस्य स्फुरणेऽपि आसाधारण्याग्रहणात् भ्रमोपपत्तिस्सुवचा। नहि देहातिरिक्तात्मा-साधारणतया धर्मभूतज्ञानस्य ग्रहणं शास्त्रादन्यतश्शक्य, दृष्ट वा। ज्ञानस्यात्मासाधारण्याग्रहणात् देहात्मभ्रमः, तद्भ्रमात्तदग्रहणमित्य -

न्योन्याश्रयस्तु प्रवाहानादितया बीजाङ्कुरन्यायेन परिहृतः। अतोऽस्मन्मते सुतरां तिरोधानोपपत्तिरिति॥

यदत्र (६५-पु) पूर्वोदाहृतश्रुतप्रकाशिकाश्रीसूक्त्यर्थंदुदूषयिषया आशंक्यते—"आत्मनः प्रत्यक्त्वेन एकत्वेनानुकूलत्वेन च स्वतः स्फुरणेऽङ्गीक्रियमाणे देहात्मभ्रमविरोधिनित्यत्वाणुत्वज्ञानत्वाद्याकारान्तराणामपि सङ्कोचरूपमावरणं निरूपयितुं न शक्यते। यथा अहमिति स्वस्मै भासमानत्वमेव प्रत्यक्त्व, तथा ज्ञानत्वादीनामपि स्वावसितप्रकाशत्वं समानमिति प्रत्यक्त्वादेरिव ज्ञानत्वादेरपि सर्वदा संविद्गोचरत्वस्य दुर्वारत्वात् कथं ज्ञानत्वादेस्तिरोधानं, कथं वा तादृगात्मस्फुरणे सति देहात्मविभ्रमः स्यात्। अपिच नित्यत्वाद्याकारान्तरज्ञानस्याऽऽगमापेक्षामन्तरापि भ्रमविरोधित्वमास्ताम्। आगमनैरपेक्ष्येणैव स्वगतसर्वधर्मज्ञानोदयसभवात्। स्वस्वधर्मव्यवहारानुगुण्येन हि स्वयंप्रकाशनित्यभूतज्ञानद्रव्यं कल्प्यते। आगमजन्यनित्यत्वादिज्ञानस्य केवलज्ञानद्रव्यजन्यनित्यत्वादिज्ञानस्य च विषयवैलक्षण्यं वा हेतुवैलक्षण्यं वा वक्तुं न हि शक्यते" इत्यादि, तत्सर्वं सिद्धान्तापरिज्ञानमूलम्। देहात्मभ्रमविरोधिनित्यत्वाणुत्वज्ञानत्वाद्याकाराणा प्रत्यक्त्वैकत्वानुकूलत्वानामिव नाऽऽत्मस्फुरणे भानमस्ति। अहमित्येव ह्यात्मस्फुरणम्। तत्र स्वप्रकाशफलित्वरूपं प्रत्यक्त्वं, तथा एकत्व सुखत्व च भासन्ते। नहि नित्यत्वादिकमपि भासते। अनुभवानुरोधेनैव ह्यभ्युपगमनीयम्। नह्यनुभवविरुद्धमनुमन्तुं युक्तम्। अन्यथा 'अयं घट' इति चाक्षुषप्रत्यक्षे घटतद्गतरूपादिभानवत् रसस्पर्शादिभानमप्यापाद्येत। अतस्तत्र सर्वप्रकाशनहेतुज्ञानसम्बन्धे सत्यपि घटगतरूपादिभाने चक्षुष एव करणत्वं, स्पर्शादिभाने च त्वगादेरेवेति यथा यथानुभवं सहकारिविशेषनियमोऽङ्गीक्रियते, तथैवात्राप्यात्मनः स्वयंप्रकाशत्वेपि यथानुभवं प्रत्यक्त्वादिवैशिष्टयेनैव तदङ्गीकारेण नित्य-

त्वादिधर्मभाने सहकार्यन्तरसापेक्षत्वमेव। तच्च सहकार्यन्तरं आगमरूपमेव। अत एव धर्मभूतज्ञानमपि चक्षुरादिकरणैः घटादितद्गतरूपादिधर्मप्रकाशकमपि, आगममन्तरा नैव आत्मगतदेहात्मभ्रमविरोधिभूतनित्यत्वादिधर्मप्रकाशकं संभावयितुं शक्यते। उक्तरीत्या नित्यत्वादिधर्मभानं धर्मिज्ञानेन वा धर्मज्ञानेन वा न संभवति, आगमेनैव तत्संभव इति सिद्धे, आगममन्तरापि देहात्मभ्रमविरोधिनित्यत्वादिज्ञानापत्तिर्भवतामेवात्र तत्त्वभ्रममापादयेत्। आगमनैरपेक्ष्येण सिद्धे हि नित्यत्वादिज्ञाने विषयवैलक्षण्यादिविचारप्रसक्तिः। किञ्चात "परेषामेवात्मनोऽन्यस्य वाऽऽवरणानुपपत्ति"रिति भवदुक्तिर्वितथैव। न वयमात्मनस्तिरोधिमङ्गीकुर्मः। अपि त्ववस्थाद्वयविशिष्टधर्मभूतज्ञानस्यैव। न हि भवतामिवास्माक मते निर्विशेषा सवित्। अतो भवतामेव तिरोधानानुपपत्तिः; नास्मन्मते। किञ्च — देहात्मभ्रमोप्युक्तरीत्या विरोध्याकारास्फुरणात असन्मते उपपद्यते। भवन्मत एव स भ्रमः नैवोपपद्यते। लोके हि स्थाणुत्वपुरुषत्वादिविरोध्याकारवतोर्द्वयोस्तत्तदाकाराग्रहणे भवति भ्रमः। तद्ग्रहणेन तु तन्निवृत्तिरिति दृश्यते। निर्विशेषवस्तुवादिनां भवतां कथमिदं घटेत? । अधिकमन्यत्र॥

यदपि चात्र (६५, ६६, पु) "आत्मगतज्ञानत्वस्याऽऽत्मासाधारण्यमात्मनैव प्रकाशताम्। स्वयंप्रकाशस्यात्मनः स्वगतसर्वधर्मप्रकाशक त्वावश्यकत्वात्। ततश्चात्मगतासाधारणज्ञानत्वे भासमाने देहात्मभ्रमोऽनुपपन्नः।" इति प्रथमत आशंक्यानुपद, "नच–तदसाधारण्यज्ञानजनकसामग्री धर्मभूतज्ञानप्रसरलक्षणा विना वेदं न स्वभावाज्जायते। देहात्मभ्रमप्रतिबन्धात्—इति वाच्यम्। अन्योन्याश्रयात्—देहात्म-भ्रमादसाधारण्याग्रहः, तदग्रहात्स भ्रम इति। नचात्रानादित्वेन परिहारः, स्वापादौ भ्रमनिवृत्त्या आत्मासाधारणतयैव ज्ञानादेर्भानापत्तौ

तेन ज्ञानेनाध्यासनाशात् तदनादित्वासंभवात्" इत्यादिकमुक्तं, स्वोक्तिव्याहत्यादिपराहतमिदम्। प्रथमत आत्मगतज्ञानत्वमात्मभास्य-मस्त्विति शङ्कैवासङ्गता। तथैव तादृशज्ञानत्वे आत्मासाधारण्यभानशङ्का च। धर्मभूतज्ञानभास्यं तद्द्वयमिति हि वदामः। अनुभव एव तत्र नियामकः। अहमित्यात्मभाने प्रत्यक्त्वाद्यतिरिक्तज्ञानत्वासाधारण्यादि-भानाभावात्। स्वयंप्रकाशत्वे स्वगतसकलधर्मावभासकत्वनियमाभावाच्च। किञ्च— "तदसाधारण्यग्रहजनकसामग्री धर्मभूतज्ञानप्रसरलक्षणा" इत्यादिशङ्काप्युपहास्यैव। ज्ञानत्वस्याहमर्थभानान्तर्भावमाशंक्य, पुनस्ता-दृशभानस्य सामग्रीजन्यत्वादिशंकनं नहि घटते। आत्मभानं हि नित्यमङ्गीकृतम्। उपरि, "आत्मासाधारणतयैव ज्ञानादेर्भानापत्तौ" इति तु ज्ञानादेरात्मासाधारण्यग्रहस्य भ्रमविरोधित्वमाशंक्यते। नतु आत्मगतज्ञानत्वग्रहस्य। एतेन धर्मिगतज्ञानत्वधर्मभूतज्ञानयोर्विशेषमगृहीत्वैव स्वैरं किमपि किमपि शक्यतेऽसम्बद्धमिति ज्ञायते। "आत्मासाधा-रणतया ज्ञानत्वादिधर्मज्ञानाभावात्" "तदसाधारण्यस्यापि तेनैवात्म-नाऽवभाससंभवात्", "तदसाधारण्यज्ञानजनकसामग्री" "तथा सति ज्ञानादेस्तदसाधारण्यानवभासमूलं", "आत्मासाधारणतयैव ज्ञानादे र्भानापत्तौ" इतीमानि वाक्यानि हि धर्मिगतज्ञानत्वधर्मभूतज्ञानोभय-विवेकाभावमूलकानीति स्पष्टमेव विदुषाम्। किञ्च—आत्मासाधारण-धर्मभूतज्ञानस्य तदसाधारण्याग्रहः देहात्मभ्रममूलः, तादृशभ्रमश्च तदग्रहमूलः- इत्यन्योन्याश्रयस्यानादित्वेन परिहारोक्तौ, यदाशंकितं, "स्वापादौ भ्रमोपरमात् भ्रमाधीनतदसाधारण्याग्रहासंभवात् असाधारण-तयैव ज्ञानादेर्भानावश्यंभावात् तेन ज्ञानेनाध्यासस्य विनष्टत्वात् विरोधिसामग्र्या तदसाधारण्यग्रहरूपायां समवहितायां पुनरध्यासोदया-संभवात् अनादित्वापायात् अन्योन्याश्रयतादवस्थ्यम्" इत्यादि, तत्रोच्यते। धर्मभूतज्ञानप्रसराभावः सुषुप्तिः। तत्र भ्रमः स्वयं

नष्ट इति भवताप्यंगीक्रियते। एवं सति तदा कथमात्मासाधारण्य-विषयधर्मभूतज्ञानप्रसरप्रसक्तिः ?। येन, भवता, 'विरोधिसामग्री समवहिता। तया नष्टो भ्रमः। पुनर्नूतनो नोत्पद्यते' इत्यादिक-मुद्घुष्येत। सुषुप्तौ ज्ञानप्रसरे सुषुप्तिव्याघातात्। किञ्च–सुषुप्तौ सर्वेन्द्रियोपरमात् स्वयमेव शान्तो भ्रमः। कथं तस्यासाधारण्यज्ञान-नाश्यत्वसंभवः। अपिच उक्तरीत्या असाधारण्यज्ञानानुदयात्, 'पुनर्भ्रमो नोदेती'त्यपि पराहतम्। कर्मणा हि ज्ञानसंकोचः। स च बद्धदशायां सर्वत्र विद्यते। कुत्रचिद्विषये संकोचः कुत्रचिदेव विकासः। सुषुप्तौ तमःकारणात् सर्वथा संकोचः। तथा च सुषुप्तौ भ्रमासभवेपि, आत्मासाधारणतया धर्मभूतज्ञानग्रहासंभवात् भ्रमविरोध्य-भावात् पूर्वतोऽनुवृत्ततदसाधारण्याग्रहानुवृत्तेः, सुषुप्त्युत्तरकाले भ्रमानु-वृत्त्युपपत्तिरिति। तस्मात् अनादित्वानपायात् अन्योन्याश्रयस्सुपरिहर एव॥

एतेन, देहाद्यध्याससंस्कारस्य प्रतिबन्धकत्वशंकातत्परिहारादि-प्रसङ्गोऽपि निरस्तः। देहात्मभ्रमस्यैवानुवृत्तेरुपपादितत्वात्। किञ्च— अनुभवे बाधितेऽपि संस्कारसत्त्वप्रतिपादनमयुक्तम्, अनुभवबाधेन तत्संस्कारस्यापि बाधितत्वावश्यंभावात्॥

यदत्रैव (६६-पु) "एतेन कर्माविद्यया प्रतिबन्धः प्रत्युक्तो वेदितव्यः। तस्यापि भ्रमसंस्कारसदृशत्वात्। कर्मरूपत्वं चाविद्यायाः अयुक्तम्। कर्महेतुत्वादविद्यायाः। तथा च मनुराह—'तमसा बहुरूपेण वेष्टिताः कर्मयोनिना' इति।" इत्यादिकम्—तदिदं शास्त्रसंस्कारवैकल्यप्रयुक्तमित्येवावगन्तव्यं भवति। कर्मरूपाविद्यायाः भ्रमसंस्कारसादृश्यस्य भवता निरूपयितुमशक्यत्वात्। भवता हि भ्रमसंस्कारे सत्येवासाधारण्यग्रहो भवतीत्यव्यवहितपूर्वमुक्तम्। तथात्र

कर्मविषये वक्तुं न शक्यते। यत्कर्मणा यत्र विषये ज्ञानप्रसरः प्रतिबद्धः, तस्मिन् कर्मणि सत्येव तत्र विषये यदि ज्ञानप्रसरः भवतीत्यङ्गीक्रियेत, तदा कथञ्चित् तत्संस्कारसादृश्यमुपपादयितुं शक्येतापि। न हि तथा वयमङ्गीकुर्मः। अविद्यायाः कर्मरूपत्वञ्च "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते॥ यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा॥" इत्यादिप्रमाणादनपलपनीयम्। त्वदुदाहृतमनुवचने तु तमश्शब्दः "तमः परे देव एकीभवति", "आसीदिदं तमोभूतं", "प्रादुरासीत्तमोनुदः" इत्यादिश्रुतिमनुस्मृत्यादिवचनानुसारात् प्रकृतिपरः। जीवकर्मानुरूपनानाविधपरिणामप्रकृत्यावेष्टिता इत्यर्थः। एतादृश-प्रकृतिसम्बन्धे कर्मैव हि कारणम्। अथवा तत्सम्बन्धस्य कर्म-प्रयोजकत्वमिति — उभयथापि कर्मयोनिनेत्यस्य सामञ्जस्यात्। सर्वथात्र मनुवचने तमश्शब्दस्य भवदभिमतशशशृङ्गायमाणभावरूपाविद्या-परत्वमुपहास्यमेव। वस्तुतस्तु—मनुवचन न भवदभिमतविरोधिमात्रम्। किंतु यथावद्दृश्यमानं विपरीतग्राहित्वमपि ज्ञापयति भवतः॥—

"तमसा बहुरूपेण वेष्टिताः कर्महेतुना।
अन्तस्संज्ञा भवन्त्येते सुखदुःखसमन्विताः॥"

इति तत्रत्यः पूर्णश्लोकः। तद्व्याख्या च—"एते वृक्षादयः तमोगुणेन विचित्रदुःखफलेनाऽधर्मकर्महेतुकेन व्याप्ताः अन्तश्चैतन्या भवन्ति। . त्रिगुणारब्धत्वेपि चैषां तमोगुणबाहुल्यात् तथा व्यपदेशः।" इत्यादिका। अयमेव प्रकरणार्थः। नात्र तमश्शब्दः अविद्यावाची। किन्तु तमोगुणवाची। "कर्मणो हेतुना" इति च नार्थः। कर्महेतुकेनेत्येवार्थः। एतच्च—अविद्याया अनादित्वात् तत्पूर्वं कर्मणोऽभावात् भवतां विरुद्धम्। सर्वथाऽविद्यायाः कर्मरूपत्वे, नैवैतन्मनुवचनविरोधः। अहो विपरीतग्रहो भवताम्॥

यदपि चात्र (६६-पु) "धर्मभूतज्ञानस्याऽऽत्मासाधारण्यं नाम किंरूपम्?। यदि धर्मान्तरं, तत्कि साधारणमुतासाधरणमिति विवेक्तव्यम्। तत् आत्मासाधारण्यं निखिलधर्मसाधारणं चेत्-तेन रूपेण तद्धर्मवत्त्वज्ञानस्य न भ्रमविरोधित्वम्। धर्मसाधारण्यस्य स्वाश्रयसाधारण्यापादकत्वेन तादृग्धर्माश्रयज्ञानस्य भ्रमविरोधित्वासंभवात्। नहि शुक्तित्वरजतत्वसाधारणमेयत्ववत्त्वज्ञानेन रजतभ्रमो निवर्तते। यदि तत् आत्मासाधारण्यमसाधारणं, ईदृशं धर्मभूतज्ञाननिष्ठात्मासाधारण्यनिष्ठं ज्ञानासाधारण्यमपि धर्मान्तरं, तत्राप्येवमित्यनवस्थाप्रसङ्गः। यदि तद्धर्ममात्रवृत्तित्वरूपं-तदा अनात्मधर्मव्यावृत्तं तत् आत्मनः स्वरूपमेवेत्यापद्यते। एवं चात्मनैव ज्ञानद्रव्यरूपेण तदसाधारण्यावगमे देहात्मभ्रमो न घटते। तत्र जडवस्तुनि भ्रमहेतवः प्रमातृकरणविषयगता रागचाकचक्याद्यो दोषा अविद्यातिरिक्ताः संभवन्ति। स्वयंप्रकाशे वस्तुनि तु तज्ज्ञानप्रतिबन्धको दोषश्चाविद्यारूप एव। गत्यन्तराभावात्। एवं च ब्रह्मण्यविद्यासंबन्धरूपमनादिसिद्धमेव" इत्युक्तम्। तत्सर्वं वैतण्डिकजल्पितमिवोपहास्यम्। तथाहि—शुक्तिस्वरूपज्ञानस्येव केवलात्मस्फुरणस्य देहात्मभ्रमविरोधित्वासंभवेन शुक्त्यसाधारणतया शुक्तित्वज्ञानस्येव आत्मासाधारणतया धर्मभूतज्ञानभानस्यैव भ्रमविरोधित्वमित्युक्तौ—अत्र केयं व्यर्था विचित्रा भवदीया विकल्पवैखरी। अस्तु, परामृशामः। यदसाधारणतया ज्ञातो य आकारः, तेनाकारेण तत्र तदितरतादात्म्यभ्रमनिवृत्तिरिति हि लोके दृश्यते। शुक्त्यसाधारणतया ज्ञातशुक्तित्वेन शुक्तौ रजततादात्म्यभ्रमो हि निवर्तते। प्रकृते च धर्मभूतज्ञानस्याऽऽत्मासाधारणस्य भानेऽपि आत्मासाधारण्यं शास्त्रज्ञानात्पूर्वं तत्र न गृहीतमिति देहात्मभ्रमोपपत्तिरिति वयं वदामः। नात्र काचिदप्यनुपपत्तिः। "गति स्वर इवाश्वस्ये"तिन्यायेन शतदूषणीमार्गानुजिगमिषयाऽत्र कृतो भवद्विकल्पस्तु निरर्थक एव। धर्मभूतज्ञाने

आत्मासाधारण्यमस्ति। अत्र एतत् आत्मासाधारण्यं कि साधारणमुतासाधारणमिति विकल्पः। साधारणमित्येवोत्तरम्। न ह्यात्मनि ज्ञानमात्रमस्ति, येनाऽऽत्ममात्रवृत्तित्वरूपमात्मासाधारण्यं धर्मभूतज्ञान-मात्रवृत्ति भवेत्। किन्तु आत्मन्यनेके धर्मास्सन्ति ज्ञानवदसाधारणाः। तेषु सर्वेष्वपि धर्मेषु आत्मासाधारण्य वर्तत इति आत्ममात्रवृत्ति-त्वरूपमात्मासाधारण्य तद्गतनिखिलधर्मसाधारणमेव, नतु ज्ञानमात्रवृत्ति। एव चात्मासाधारण्यमात्ममात्रवृत्ति निखिलधर्मसाधारणमेवेति फलितम्। नचैवं सति भ्रमविरोधित्वं न स्यादिति वाच्यम्। सुतरां भ्रमविरोधित्वात्। आत्मासाधारण्यस्य धर्मभूतज्ञानमात्रवृत्तित्वाभावेपि आत्मैकान्तसर्वधर्म-साधारण्येऽपि अनात्मधर्मसाधारण्याभावात्। आत्ममात्रवृत्तित्वेन साधारणेन रूपेणापि धर्मभूतज्ञानवत्त्वेनात्मभानेपि आत्मतदितरदेहतादात्म्यभ्रमनिवृत्ति संभवात्। आत्मासाधारण्यस्य आत्ममात्रवृत्तित्वरूपस्यैव संभवात् धर्मान्तर-त्वोल्लेख एव व्यर्थः। किञ्च-शुक्तित्वरजतत्वसाधारणमेयत्वतौल्यं च धर्मभूत-ज्ञानगतात्मासाधारण्यस्याऽऽत्मैकान्तसर्वधर्मसाधारणस्यापि दुर्वचम्। नहि मेयत्वाश्रयशुक्तित्वरजतत्वयोरिवाऽऽत्मासाधारण्याश्रयभूतज्ञानेच्छयोर्वि-भिन्नाश्रयत्वं, येन, तेन रूपेण तद्धर्मवत्त्वज्ञानस्य भ्रमाविरोधित्वशङ्का प्राप्तावसरा स्यात्। किञ्च-अनात्मधर्मव्यावृत्तं तद्धर्ममात्रवृत्तित्वम्, तस्यात्मस्वरूपत्वेन आत्मनैव तदसाधारण्यमवगन्तव्यमित्यप्यसङ्गतम्। आत्मासाधारण्यस्य ज्ञानेच्छाद्यात्मगतसर्वधर्मसाधारण्यात् तद्धर्ममात्र वृत्तित्वरूपत्वमसभावितमेव। तथैवात्मासाधारण्यं धर्मभूतज्ञानादिगत-मात्मस्वरूपमित्यप्यसङ्गतम्। तथाचात्मासाधारण्येनाकारेण धर्मभूत-ज्ञानस्य आत्मभास्यत्वासंभवात् आत्मस्फुरणेऽपि आत्मासाधारण्यविशिष्ट-धर्मभूतज्ञानभानाभावात् देहात्मभ्रमोपपत्तिः। किञ्च-जडस्वयंप्रकाश-वस्तुभेदेन भ्रमहेतुभेदकथनमपि निर्गुणब्रह्मव्यतिरिक्तसर्ववस्तूनामावि-द्यकत्ववादिनां भवतामसंभावितमेव। सर्वेषामविद्यादोषमूलकत्वाविशेषात्।

किञ्च–स्वयंप्रकाशवस्तुनि तज्ज्ञानप्रतिबन्धको दोषः अविद्यारूप एवेत्यपि न संगच्छते। नहि भवता ज्ञानाविद्ययोः प्रतिबद्ध्यप्रतिबन्धकभावः भावाभावयोरिवाङ्गीकर्तु शक्यते। तथासति, अविद्याया अभाव-रूपत्वापत्तेः। किन्तु मणिमन्त्रादिन्यायेनैव स वाच्यः। तथाच दोषेणाविद्यारूपेणैव भाव्यमिति नियमकल्पनं व्यर्थमेव। इत्थंच निर्विशेषस्वप्रकाशवस्तुनः निर्निमित्ताविद्यातिरोधानकल्पनमनुपपन्नम्। कल्पने च स्वरूपनाशो दुष्परिहर एवेति सिद्धम्॥

यदपि चोक्तं—(६६–६७–पु) दीपप्रभास्थानीयमात्मधर्मभूतज्ञानं संकोचविकासशालि यदुपेयते, तत्र नित्यस्य धर्मभूतज्ञानस्य विषय-प्रकाशात्मकविकासो नाम कः? कि विषयप्रकाशजनकत्वरूपः, उत–विषयव्यापित्वरूपः, अथवा–अवस्थान्तरपरिणामः, आहोस्वित्—कर्माविद्यात्मकसंकोचभगः। नाद्यः— सति स्वाश्रयवस्तुनि प्रकाशगुण मात्रस्याजन्यत्वात्। तत्र शुक्लरूपमयस्य प्रकाशस्यापि साकमालोकेने-वोदयोपगमात्। घटादीनामपि नैल्यादिस्वगुणेन सहैव ह्युत्पत्तिः। न द्वितीयः—ज्ञानस्योत्पत्तिविनाशानुभवायोगात्। अतीतादिविषये व्याप्त्यनुपपत्तेश्च। नापि तृतीयः—मुक्तौ सर्वविषयावस्थान्तरपरिणा-मोत्पत्तौ "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" 'नागन्तुकेन'ति न्यायविरोधापत्तेः। परिणामिनो विकारित्वेनाऽनित्यत्वप्रसङ्गाच्च। नापि च तुरीयः—एवं तर्ह्यात्मस्वरूपज्ञानमेव संकोचविकासशील-मुपेयताम्। तादृगवस्थाद्वयव्यभिचारेऽपि आत्मनो नित्यत्वस्य त्वन्मतेऽनपायात्। विषयसम्बन्धाधीनमात्मनो ज्ञातृत्वमप्युपपन्नम्" इति—

अनन्तदोषदूषितेप्यत्र स्थालीपुलाकन्यायमनुसृत्य प्रतिवदामः। प्रथमतः, "कोसौ विषयप्रकाशात्मकविकासः" इत्युपक्रम्य,

तद्विकल्पावसरे विषयप्रकाशजनकत्वमिति प्रथमविकल्पकल्पनमेवासङ्गतम्। प्रकाशात्मकस्य विकासस्य प्रकाशजनकत्वरूपत्वासंभवात्। प्रथम-विकल्पदूषणहेतूपन्यासावसरे च, "स्वाश्रयवस्तुनि प्रकाशगुणमात्रस्याजन्यत्वात्" इत्युक्तमप्यसिद्धमेव। प्रकाशो ह्यत्र ज्ञानस्य विकासः प्रसरणरूप एव। "प्रज्ञा च तस्मात्प्रसृता पुराणी" इत्यादि-प्रमाणसिद्धः। "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादिप्रमाणसिद्धं च ज्ञानस्य नित्यत्वम्। तथा चाश्रये धर्मभूतज्ञाने नित्ये सत्येव तस्य प्रसरणरूपविकासात्मकप्रकाशो जायत एवेति प्रामाणिकार्थे सिद्धे मिथ्यावादिनां भवतामत्र दूषण मिथ्याभूतमेव। किञ्च— "साकमालोकेनेव" त्यनन्वितम्। साकमालोकेनैवेत्येव भाव्यम्। आलोकस्य हि अनित्यत्वं प्रमाणसिद्धम्। घटादिविषयेप्येवमेव॥

विषयव्यापित्वरूपद्वितीयविकल्पदूषणमसम्बद्धम्। ज्ञानविकासस्य विषयव्यापित्वरूपत्वे विरोधाभावात्। विषयव्याप्तिश्च कदाचिदेव हि भवति। न नित्या। अतः, यदा ज्ञानस्य विषयव्यापित्वरूपविकासो भवति, तदा ज्ञानमुत्पन्नमिति, यदा च स विकासो निवर्तते, तदा ज्ञानं नष्टमिति च उत्पत्तिविनाशानुभवोपपत्तिस्सुवचैव। अतीत-विषयव्याप्त्यनुपपत्तिप्रदर्शनं तु अकिञ्चित्करम्। वर्तमानविषयनियत-प्रत्यक्षेतरस्मृत्यादिस्थले असत्यपि विषये स्मृत्यनुमित्यादिज्ञानसम्बन्धस्य सर्वैरपि निर्वाह्यत्वात्। विषयविषयिभावेन नैयायिकैः, प्राकट्याश्रयत्वेन च भाट्टैर्निर्वाहः कृतः। अस्मन्मते च ज्ञानस्य द्रव्यत्वात् देशविप्रकर्षेपि विषयसंयोगवत् कालविप्रकर्षेपि तत्संभवेन निर्वाहः क्रियते। अधिकं न्यायसिद्धाञ्जनादौ द्रष्टव्यम्। तृतीयविकल्पदूषणमपि दुष्टमेव। नित्यस्यैव मतो ज्ञानस्य कर्माविद्यया सङ्कुचितस्य मुक्तिकाले तन्निवृत्तौ विकाससंभवेन सर्वविषयसम्बन्धो भवति। नहि जीवस्य धर्मभूतज्ञानं मुक्तावागन्तुकमित्युच्यते। येन स्वेन रूपेणेत्यस्य विरोधाशंका स्यात्।

श्रुतौ, 'अभिनिष्पद्यते' इति तु युक्त्यायमर्थो निष्पद्यत इतिवदिति न किञ्चिदत्र बाधकम्। परिणामित्वेऽपि ज्ञानस्य नानित्यत्वप्रसङ्गः। अजस्रपरिणामित्वेऽपि प्रकृतिनित्यत्वस्य, "अजामेकां लोहितशुक्लरूपां बह्वीः प्रजाः सृजमाना सरूपाः", "नित्या सततविक्रिया" इत्यादिप्रमाणसिद्धत्वात्॥

अविद्यात्मककर्मसंकोचभङ्गकल्पस्तु विकासस्य संकोचापगम-रूपत्वात्प्रामाणिक एव। कर्माविद्यात्मकसंकोचभङ्ग इति भवदीयस्तुरीय-विकल्पो दुस्स्थ एव। यतः कर्मात्मकाविद्यया संकोचो ज्ञानस्य, न तु कर्माविद्यात्मकत्वं संकोचस्येति। किञ्च—प्रत्यगात्मा कश्चित्, तस्य धर्मभूतं किञ्चित् स्वस्वेतरप्रकाशकं ज्ञानमित्ययं कल्पः न केवलं भवत्कल्प इव स्वकपोलमात्रकल्पितः, येन आत्मस्वरूपस्यैव संकाचविकासशालित्वमुपेयतामित्याशङ्का प्रसजेत्। किन्तु अनुभव-प्रमाणाभ्यां हि सिद्धः। जानाम्यहमिति चानुभवः। "एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इत्यादिका चात्र श्रुतिरनुसन्धेया। आत्मनः स्वेतरप्रकाशकत्वासंभवात्, धर्मभूतज्ञानाभावे विषयसम्बन्धस्य दुरुपपादतया न कथंचिदपि ज्ञातृत्वमात्मनि संभवेत्। ज्ञातृत्वकर्तृत्वादिविषये सांख्यसौगतचार्वाक-संकरात्प्रकल्प्यमानो भावत्कः कल्पस्तु विस्तरेण न्यायसिद्धाञ्जनादिषु दूषित इति तत्र द्रष्टव्यम्॥

यदत्र—(६७-पु) धर्मभूतज्ञानस्य संकोचः, किं शक्तिमात्रावस्था, उत-सत्यपि धर्मभूतज्ञाने दिवसारोपितदीपालोकस्येव तस्याभिभवमात्रम्, आहो—यावदात्मपरिमाणत्वम्। नाद्यः—शक्तिमात्रावस्थायाः आत्म-निष्ठत्वेन तादृशावस्थापरिणामितया आत्मनो विकार्यत्वापत्तेः। न

द्वितीयः—तादृशालोकस्येव ज्ञानस्य सुषुप्तावपि विषयसम्बन्धस्यावर्जनीयतया ज्ञानस्य विषयसम्बन्धे इन्द्रियसंनिकर्षनैरपेक्ष्यप्रसङ्गेन, इन्द्रियार्थसनिकर्षस्य च एतादृगसंकोचप्रतिबद्धत्वाभावात् सार्वदिकविषयज्ञानसम्बन्धेन सुषुप्तिजागरविभागानुपपत्तेः। नापि तृतीयः—आत्मपरिमाणसदृशपरिमाणमात्रत्वेनापि ज्ञानस्य सुषुप्तौ स्वतो भानसंभवात् ज्ञातृत्वस्यापि तदा भानप्रसङ्गात्। नचेष्टप्रसङ्ग इति वाच्यम्—सुषुप्तिजागरयोरविशेषापत्तेरेव। यद्यात्मनो ज्ञातृत्वं सार्वदिकमपि विषयसम्बन्धाधीनमेव तदनुभूयत इति मतम्—तर्हि ज्ञानस्य ज्ञेयसम्बन्धनियमो भवन्मते वक्तुं न शक्यते। नित्यात्मनि व्यभिचारात्। ज्ञानस्य ज्ञेयसम्बन्धानुपपत्तेश्चाऽऽत्मनि नित्यज्ञेयप्रत्यक्त्वादिमत्त्वमनुपपन्नम्। "अतोऽन्यदार्त"मित्यादिश्रुत्या नित्यज्ञेयाभावाच्च। अन्यथा सुषुप्त्यादावपि प्रत्यक्त्वादिप्रतीत्यापत्तेः" इति धर्मभूतज्ञानसंकोचानुपपत्तिचोदनम्—

तत् केवलं संरम्भकृतम्। ज्ञानादीना शक्तिमात्रावस्थेत्यादिप्रथमविकल्पः अनभ्युपगमपराहतः। दिवसदीपालोकवत् अभिभवविकल्पोऽपि तथैव। अतो ज्ञानविषयसम्बन्धस्य सार्वदिकत्वाभावात् इन्द्रियसंनिकर्षाद्यहेतुत्वाद्याशंका दूरोत्सारिता। ज्ञानप्रसराभाव एव संकोच इत्येव ह्युच्यते। प्रसरस्य विषयसम्बन्धरूपत्वेन तदभाव एव सकोच इति, तत्र कर्मैव हेतुरिति च फलति। अत एव तृतीयोऽपि कल्पो न कल्पते। विषयसम्बन्धसमय एव हि धर्मभूतज्ञानभानम्। सुषुप्तौ तदभावात् न तद्भानापत्तिरिति ज्ञातृत्वभानप्रसङ्गस्य का कथा।। विषयिज्ञानज्ञेयसम्बन्धनियमोऽपि नानुपपन्नः। किञ्चात्र ज्ञेयसम्बन्ध इत्यनेन विषयविषयिभावरूपो वाऽन्यथारूपो वा विवक्ष्यते?। उभयथापि ज्ञानज्ञेयसम्बन्धनियमो निखिलवेदप्रमाणवादिनामस्माकं मते नैवानुपपन्नः। "स-आत्मा स विज्ञेयः" इत्यादिश्रुत्या आत्मन एव हि ज्ञेयत्वमुद्घोषितम्। अहमिति च सर्वदा प्रत्यक्त्वादिरूपेणैव

भानमनुभवसिद्धमेव। "अतोऽन्यदार्त"मित्यस्य च नित्यज्ञेयनिषेधकत्वं नानुन्मत्तो ब्रूयात्। "एतदेव एकं अनार्तमविनाशि कूटस्थम्", "आर्त–विनाशि–आर्तिपरिगृहीतम्" इति हि यथावस्थितव्याख्यानं शाकरीयं दृश्यते। अतः कर्मणा धर्मभूतज्ञानसंकोचः सुतरामुपपन्न एवेति सिद्धम्॥

यदपि—(६७–६८-पु) आत्मनो धर्मभूतज्ञानस्य च सम्बन्धभानं नोपेयत इति विभ्रमेण, "ज्ञातृत्वभानानुपपत्तिः, स्वकीयत्वपरकीयत्वादिविभागानुपपत्तिः, अहं जानामीति चानुभवस्सार्वजनीनो विरुद्ध्यते" इत्यादिकं बहूक्तम्—तत्सर्वमस्थाने। अहं जानामीत्यनुभवस्य विषयप्रकाशवेलायामेव संभवात् तदा ज्ञानाश्रयत्वस्यापि भानावश्यंभावात् ज्ञातृत्वभानमुपपन्नमेव। अत एव स्वकीयत्वादिविभागोऽप्युपपन्नः। स्वप्रकाशधर्मभूतज्ञानस्यैव विषयप्रकाशनवेलाया विषयावभासकत्ववत् स्वस्वाश्रयसम्बन्धावभासकत्वमपीति ज्ञातृत्वभानस्योपपन्नतया, अहं जानामीत्यनुभवः सुतरामुपपन्नोऽस्मन्मते॥

यदत्र (६८–पु) "पृथक् पृथक् स्वस्वगतधर्मव्यवहारानुगुण्यापादकज्ञातृज्ञानद्वयमपि स्वभावतो विशेषणविशेष्यभावेन भासत इत्यपि वक्तु न शक्यते। विशेषणविशेष्यभावस्य ज्ञानज्ञातृस्वरूपत्वाभावात्। तथा च ज्ञातृविलोपप्रसङ्गस्तदवस्थ एव। नन्ववस्थाज्ञानाश्रयत्वमात्मन इति चेन्न—उपादानोपादेयभावविरहिणोराश्रयाश्रयिभावे संयोगस्यैव सम्बन्धत्वदर्शनात् उपादानोपादेयभावशून्ययोरात्मज्ञानयोस्संयोगासंभवात्, अन्यथा निरवयवत्वापरिच्छिन्नत्वभङ्गप्रसङ्गात् आश्रयाश्रयिभावस्यैवासंभवात्। सावयवत्वे च ज्ञानात्मनोरनित्यत्वविकारित्वापत्तेः। किञ्च–ज्ञानस्यात्मोपादानकत्वाभावे तस्य तद्धर्मत्वनियमो न स्यात्, आत्मान्तरवत्। नच दीपप्रभाया दृष्टमिति वाच्यम्। दीपसम्बन्धसहभावनिबन्धनतया

दीपप्रभेति व्यपदेशे सत्यपि भिन्नोपादानोपादेयतया तयोर्धर्मधर्मि-भावानुपपत्तेः। अन्यथा तैजसप्रभायाः पार्थिवमणिधर्मत्वापत्तिः। मणिप्रभेति व्यवहारस्तु मण्याश्रयत्वादेवेति दीपप्रभाव्यवहारोऽपि तथैव। नाप्यपृथक्सिद्धधर्माणामिव ज्ञानात्मनोर्धर्मधर्मिभावो युज्यते। अयुत-सिद्धधर्माणामेवासिद्धेः। किञ्च—विषयज्ञानस्येव ज्ञानस्वरूपात्मनोऽपि अवस्थाज्ञानाश्रयत्वमनुपपन्नम्" इत्युक्तम्॥

अत्रोच्यते। अहं जानामीत्यनुभव एव ज्ञानाश्रयत्वेनैवाऽहमो भानात् ज्ञातृत्वभानं निराबाधमिति पूर्वमेवोक्तत्वान्नेह पुनरुच्यते। घटादिविषयाणामिवात्माश्रितत्वस्यापि तेनैव धर्मभूतज्ञानेनावभासमान-त्वात् स्वधर्मव्यवहारानुगुण्यापादकमेव धर्मभूतज्ञानमिति न कोपि बाधः। अत्र ज्ञातृत्वविलोपतादवस्थ्यं भवतामेव दुर्वारमिति न संशयलेशोऽपि। उपादानोपादेयभावशून्ययोराश्रयाश्रयिभावे संयोगसापेक्षत्वमितीयं नियम-कल्पना किं त्वन्मतरीत्या, उत—तार्किकादिरीत्या, अथास्मन्मतरीत्या?। नाद्यः—असंभवात्। नहि मिथ्याभूतशुक्तिरजतस्थले उपादानोपादेय-भावव्यवहारो दृष्टचरः। तथैव हि जगद्ब्रह्मणोरपीति कुत्रापि भवन्मते उपादानोपादेयभावासिद्धया तद्रहितस्थलेत्यादिनियमोऽनुपपन्नः। पार-मार्थिकत्वेनाभावेऽपि व्यवहारदशायामभ्युपगम्यत इति चेत् तर्हि तेनैव व्यवहारेण अहमर्थात्मनो ज्ञानधर्माश्रयत्वादिकमपि स्वीकार्यमेव। किञ्च—पारमार्थिकव्यावहारिकप्रातिभासिकेत्यादि सर्वं भवद्गोष्ठीमात्र-प्रसिद्धं अप्रसिद्धं लोके न व्यवहार्यम्। सर्वजनीनानुभवानुरोधेनैव नियम-कल्पनौचित्यात्। न द्वितीयः—उपादानोपादेयभावशून्ययोरपि संयोगनैरपेक्ष्येणैव नित्यगुणगुणिनोर्जातिव्यक्त्योश्चाश्रयाश्रयिभावस्वीकार-दर्शनात्। न च द्रव्ययोरेवेति वाच्यम्। सर्वाधारस्य कालस्य घटादेश्च विना संयोगमाश्रयाश्रयिभावाङ्गीकारात्। नापि तृतीयः—

मणिप्रभादौ नियमभङ्गदर्शनात्। द्रव्ययोर्मणिप्रभयोरुपादानोपादेयत्व-रहितयोस्संयोगं विनैवापृथक्सिद्धिसम्बन्धेन ह्याश्रयाश्रयिभावो दृश्यते। तथाच प्रकृतेऽपि तेनैव सम्बन्धेनात्मनो धर्मभूतज्ञानाश्रयत्वोपपत्त्या ज्ञानात्मनोस्सावयवत्वविकारित्वाद्यापत्तिरप्रसक्तैव। किञ्च–तद्धर्मत्वनियमः उपादानोपादेयभावप्रयुक्त एवेत्यबद्धं कृत्वा आत्मज्ञानयोरपि तदभावा-दात्मधर्मत्वनियमो ज्ञानस्य न स्यादिति कुचोद्यकरणमपि दीपप्रभादि-विरोधादपास्तम्। नच तत्र धर्मधर्मिभाव एव नास्तीति वाच्यम्। अनुभवविरोधात्। प्रभाया दीपधर्मत्वेनैव ह्यनुभवोऽनन्यथासिद्धो दृश्यते, दीपस्येयं प्रभेति। मणिप्रभाया मणिधर्मत्वापत्तिश्चेष्टापत्त्या परिहृता। नचात्र पार्थिवमणेस्तैजसप्रभा कथं धर्मो भवितुमर्हतीति वाच्यम्। मणौ तैजसांशस्यापि विद्यमानत्वेन तत्तेजोद्रव्यांशधर्मत्वस्य प्रभायामुपपन्नत्वात्। एतेन–अयुतसिद्धधर्माणामप्रसिद्धिशङ्कापि पराहता। प्रत्यक्षतोप्यनुभूयमानस्याबाधितस्याप्यपलापस्तु अबाधितप्रत्यक्षश्रुत्यादि-प्रतिपन्ननिखिलजगद्ब्रह्मगुणादिमिथ्यात्ववादिनां भवतामेव शोभावहः। विस्तरस्तु तत्त्वटीकादौ द्रष्टव्यः। विषयज्ञानस्येव ज्ञानस्वरूपस्यात्मनोऽपि ज्ञानाश्रयत्व नास्तीति चोद्यं तु श्रुतिबाधातपराहतम्। "न विज्ञा-तुर्विज्ञातेः" "ज्ञोऽत एव" इत्यादिश्रुतिसूत्रप्रमाणसिद्धत्वादात्मनः ज्ञानाऽनाश्रयत्वसाधकज्ञानत्वहेतुर्बाधित एवेति सिद्धम्॥

यदपि (६८–पु)"अस्माकं तु मते आत्मनो ज्ञानाश्रयत्वमौपाधिकम्। अनुकूलतर्कानुगृहीतव्याप्तिविरोधात् नाप्रयोजकशङ्कापि। अतिरिक्त-धर्मभूतज्ञानकल्पन एव गौरवेणाप्रयोजकत्वम्। किञ्च–स्वाभाविकत्वे ज्ञातृत्वस्य सुषुप्त्यादावपि प्रतीतिः स्यात्। नित्यज्ञानस्य स्वतोऽ-प्रकाशमानत्वे तिमिरस्येवान्यदापि न प्रकाशता स्यात्। तस्मात्प्रकाश-तिरोधानं प्रकाशनाश एवेति तवैव प्रसज्यते" इति। तत्सर्वमसाम्प्रतम्।

श्रुतिं प्रमाणीकृत्य आत्मनो ज्ञातृत्वं प्रसाध्यते सूत्रकृद्भिः। श्रुति-सूत्रमार्गमुत्सृज्य यथेच्छं स्वकपोलमात्रप्रमाणैर्भवद्भिरात्मनो ज्ञाना-श्रयत्वमौपाधिकमिति कल्पनमत्यन्तमुपहास्यमेव॥ अनुकूलतर्कानुगृहीत-व्याप्तीति शब्दप्रयोगमात्रेण नह्यर्थसिद्धिः। कोऽसावनुकूलतर्कः, का च तदनुगृहीता व्याप्तिः? श्रीभाष्यादौ बहुशो भवदनुकूल-तर्कादिपराहतिः प्रदर्शितेति तत्रैव द्रष्टव्यम्। कल्पनाया हि धर्मभूतज्ञानस्य गौरवेण अप्रयोजकत्वशङ्कावकाशः। श्रुतिप्रतिपन्नार्था-भ्युपगमे न दोषावकाशलेशोऽपि। स्वाभाविकमपि ज्ञातृत्वं विषय-प्रकाशनवेलायामेवानुभूयत इति सुषुप्त्यादौ तदनुभवप्रसङ्गो नैवास्तीति च पूर्वमेव न्यरूपि। कर्मप्रतिबद्धस्य ज्ञानस्य सदा प्रकाशमानत्वापत्तौ मणिप्रतिबद्धवह्नेरपि दाहकत्वापत्तिर्दुर्वारैव स्यात्। अस्मन्मते अवस्थावज्ज्ञानद्रव्याभ्युपगमेन तस्य कर्मणा संकोचे प्रकाशनाशा-पत्तिर्नास्मन्मते। निर्विशेषवादित्वन्मत एव प्रकाशस्वरूपस्याज्ञानतिरो-धानाभ्युपगमे स्वरूपनाशापत्तिर्दुर्वारेत्युक्तौ, "तस्मात्प्रकाशतिरोधानं प्रकाशनाश एवेति तत्रैव प्रसज्यत" इति त्वदुक्तिः, पृष्ठताडने दन्तपतनोक्तिवदसम्बद्धार्था सर्वजनोपहास्यैव॥ इत्थंच श्रुतिस्मृत्यनुभव-प्रमाणप्रतिपन्नात्मातिरिक्ततदसाधारणधर्मभूतज्ञानस्य कर्मणा संकोच-विकासावस्थाद्वयोपपत्तेस्सुकरत्वेन नास्मन्मते प्रकाशनाशापत्तिः॥ अप्रामाणिक-प्रमाणविरुद्ध-निर्विशेषप्रकाशमात्रस्वरूपवादिनां भवतामेव अज्ञानतिरोधानाभ्युपगमे स्वरूपनाशापत्तिर्दुर्वारेति सिद्धम्॥

इत्थमत्र तिरोधानानुपपत्तिर्निरूपिता।
प्रमाणयुक्तिभिस्सैषा सर्वथैव दुरुद्धरा॥

॥इति द्वितीयः परिच्छेदः॥

## ॥तृतीयः परिच्छेदः—भावरूपाज्ञानस्वरूपानुपपत्तिः॥ (३)

१. ब्रह्मातिरिक्ताज्ञानस्य सत्यत्वे द्वैतमापतेत्।
मिथ्यात्वे तत्कल्पकस्यापेक्षणादनवस्थितिः॥

२. अज्ञानस्य त्वनादित्वे कल्पितत्वं कथं भवेत्।
कल्पितत्वाविरोधायाऽनादित्वं त्याज्यमेव तत्॥

३. कल्पितत्वात्ततस्तस्य चानवस्थाऽवतिष्ठते।
स्वरूपानुपपत्तिस्साऽनिवार्येतीह कथ्यते॥

द्रष्टृदृश्यादि सर्वं जगत् स्वप्रकाशस्वरूपे ब्रह्मण्यध्यस्तम्। तादृशजगदध्यासे दोषः अज्ञानमेवेत्येवंरूपे अद्वैत्यभिमते, "तदज्ञानरूपो दोषः परमार्थः, अथापरमार्थः। आद्ये—अद्वैतहानिः। अन्त्येपि—द्रष्टृरूपो वा दृश्यरूपो वा दृशिस्वरूपो वा। न प्रथमद्वितीयौ—द्रष्टृदृश्ययोरपि काल्पनिकत्वेन तत्कल्पनामूलदोषान्तरसापेक्षत्वापत्त्याऽनवस्थानात्। नान्त्यः—दृशिस्वरूपभेदानभ्युपगमात् अनवच्छिन्नदृशेः परमार्थत्वेन अपरमार्थाज्ञानरूपत्वासम्भवात्। अवच्छिन्नदृशेस्तु काल्पनिकत्वात् पूर्ववदनवस्थितेः। यदि चैतन्यमेव परमार्थभूतं दोषः, तदा तेनैवाज्ञानकल्पकदोषभूतेन चैतन्येन साक्षात् प्रपञ्चकल्पनासम्भवेन मध्येऽज्ञानकल्पनमेव व्यर्थं स्यात्। किञ्च—ब्रह्मरूपदोषस्य नित्यत्वेन निवृत्त्यसम्भवादनिर्मोक्षापत्तिश्च। अतः ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमे जगदध्यासो दुरुपपाद एव भवताम्" इति श्रीभाष्यादौ दूषणं दत्तम्॥

यदत्र—(६९-७०पु) "अज्ञानरूपदोषः दृश्यस्वरूप एवाङ्गीक्रियते भेदस्य स्वभेदकत्वमिवास्यापि स्वकल्पकत्वसंभवात् तत्कल्पकदोषान्तरनैरपेक्ष्येण नानवस्थाप्रसङ्गः। वस्तुतस्तु चैतन्यस्याज्ञानं स्वाभाविकम्।

घटरूपस्य घटप्रागभावस्य स्वाभाविकस्यापि निवृत्तिदर्शनात् स्वाभाविकाज्ञानस्यापि निवृत्तिस्संभाव्यत एव। स्वाभाविकत्वस्यानिवृत्तावप्रयोजकत्वात्। चिद्भिन्नत्वविशिष्टसत्तादात्म्यवत्वरूपदृश्यत्वस्यैव निवर्त्यतावच्छेदकत्वात् तत्प्रकृतेऽस्तीति न दोषः। अथवा अपरमार्थभूतज्ञानकल्पकदोषान्तरकल्पनामूलानवस्थाऽभ्युपगम्यते। कल्पितं सर्वमपि तत्त्वज्ञानोदयात् प्राक् तात्त्विकप्रामाण्यविहीनमेव। नच—अनवस्थादोषाभ्युपगमे माध्यमिकपक्षप्रसङ्गः। अधिष्ठानापारमार्थ्येऽपि अधिष्ठानान्तरसापेक्षत्वप्रयुक्तानवस्थादोषस्यादूषणीयत्वात्—इति वाच्यम्। भ्रमबाधयोस्साधिष्ठानत्वसावधित्वनियमदर्शनादेवाधिष्ठानपारमार्थ्यप्रसाधनात्। नहि वयमधिष्ठानकल्पनानवस्थाभियाऽधिष्ठानपारमार्थ्यं साधयामः, येन माध्यमिकपक्षप्रसङ्गः स्यात्। भ्रमश्च साधिष्ठान एव दृश्यते। तद्बाधश्च तत्त्वावधिक एव, इदं रजतं, नेदं रजतमित्यादौ। श्रुत्यादयश्च सद्रूप आत्मैवाधिष्ठानं बाधावधिभूतं तत्त्वमिति वर्णयन्ति। अतो न माध्यमिकपक्षप्रसंगः" इत्यादिकम्। तत्र प्रतिब्रूमः—

अज्ञानस्य दृश्यस्वरूपत्वं न संभवति, बाधात्। दृश्यस्य काल्पनिकत्वेन तत्कल्पनामूलदोषापेक्षावत् दोषरूपाज्ञानस्यापि काल्पनिकत्वेन तन्मूलदोषान्तरापेक्षयाऽनवस्थापातात्। नच भेदस्य स्वभेदकत्ववदत्रापीति वाच्यम्—वैषम्यात्। तत्तत्संस्थानानतिरिक्तघटत्वादिरूपभेदस्य हि स्वभेदकत्वं नाम इतरव्यावृत्ततया स्वावेदकत्वमेव। तच्च प्रत्यक्षदर्शनादभ्युपगम्यते। नहि घटपटादिव्यक्तिभेदकतत्तत्संस्थानाऽनतिरिक्तघटत्वपटत्वादिभेदकभेदान्तरं पश्यामः। प्रकृते तु अज्ञानस्य द्वैतभीत्या काल्पनिकत्वावश्यंभावेन तत्कल्पकदोषान्तरापेक्षाऽवश्यंभाविन्येव। तथाचानवस्थादोषः। यदि अज्ञानमेव दोष इत्युच्यते, तदाऽस्य दोषत्वं कथमवगम्यते? । नच—ब्रह्मज्ञानबाध्यत्वात् तदवगम्यत इति वाच्यम्। अन्योन्याश्रयप्रसङ्गात्। दोषत्वे निश्चिते ब्रह्मज्ञानबाध्यत्वम्,

तद्बाध्यत्वे सिद्धे तद्दोषत्वनिश्चय इति। किञ्च—स्वकल्पनामूलदोषत्वं स्वस्यैव बाधितम्, स्वस्य दोषत्वे सिद्धे स्वावभासस्य भ्रमत्वसिद्धिः, तत्सिद्धौ स्वदोषत्वसिद्धिरिति पूर्वोक्तदोषादेव। नहि लोके शुक्तिरजतादिस्थले विना चाकचक्यादिकं रजतादेरेव दोषत्वं दृश्यते। अतः वस्त्वपारमार्थ्यवादिना यावत् अपरमार्थवस्तुव्यतिरिक्तपारमार्थिकदोषान्तरं नाभ्युपगम्यते, तावदपारमार्थ्यं वस्तुनो नोपपादितमेव भवेत्। किञ्च-ब्रह्मणोऽज्ञानं स्वाभाविकमित्यङ्गीकारे तदनिवृत्तिप्रसङ्गो दुष्परिहर एव। अनिवृत्तौ स्वाभाविकत्वस्य प्रयोजकत्वध्रौव्यात्। स्वाभाविकत्व हि स्वरूपप्रयुक्तत्वम्। स्वरूपनाशे हि तत्प्रयुक्तनाशप्रसक्तिः, औपाधिकस्य उपाधिनाशान्नाशवत्। प्रागभावदृष्टान्तस्तु विषमः। किं स्वरूपप्रयुक्तोऽयं प्रागभावः, येन तस्मिन् स्वरूपे विद्यमान एव स्वयं नश्यतीति स इह दृष्टान्तः स्यात्। किन्तु घटादेरनित्यत्वेन तदुत्पत्तेः पूर्वं तत्प्रागभावस्यानादित्वेपि तदुत्पत्त्यनन्तरं स्वयं निवर्तमानस्य तस्य प्रागभावस्य घटादिस्वरूपप्रयुक्तत्वं न स्यादेव। नित्यवस्तुविषये प्रागभावप्रस्तावोपि न घटते। स्वरूपानुबन्धित्वमनिवृत्तिप्रयोजकतयैव यावदात्मभाविधर्मादौ श्रूयत इति अज्ञानस्य स्वाभाविकत्वे तन्न निवर्ततैव। "घटरूपस्य घटप्रागभावस्ये"ति किमभिप्रेत्य भवतोच्यत इति न विद्मः। नहि कोपि घटप्रागभावं घटरूपमभ्युपगच्छन् दृश्यते। किञ्च घटप्रागभावस्य घटरूपत्वे प्रागभावे नष्टे घटस्यापि नाशप्रसङ्गः, तद्रूपत्वात्तस्य। "चिद्भिन्नत्वविशिष्टसत्तादात्म्यमेव दृश्यत्वं निवर्त्यतावच्छेदक"मिति च आसम्बद्धम्। दृग्विषयत्वमेव दृश्यत्वमित्येतावति स्थिते चिद्भिन्नत्वादिपरिष्कारः केवलपरिभाषार्थं एव। दृश्यत्व दृक्तादात्म्यमिति चोपहास्यम्। किञ्च—घटादौ चिद्भेदसत्त्वेपि सत्तादात्म्यं नास्तीति निरुक्तदृश्यत्वं बाधितमेव। अज्ञानेऽपि तथैव।

नहि घटतादात्म्यं पटे स्यात्। नच सत्तादात्म्याभावेपि तद्भ्रमः उपपद्यत इति वाच्यम्। तथासति शुक्तौ रजततादात्म्यमिव घटादौ सत्तादात्म्यमध्यस्तमिति सतोऽध्यासाधिष्ठानत्व नोपपद्येतेत्यादिबहु दोषोन्मेषापत्तेः। अथवेत्यादिपक्षान्तरारंभे च अपरिहार्यत्वधियाऽनवस्थादोषाभ्युपगमो दृश्यते। अनवस्थाऽन्योन्याश्रयात्माश्रयादिदोषाङ्गीकारोऽनुपपन्नैकवेषाज्ञानवता भवतामेवालङ्कारः। "कल्पितं सर्वमपि तत्त्वज्ञानोदयात्प्राक् तात्त्विकप्रामाण्यविहीनमेव" इति भवद्वचनमत्रासम्बद्धम्। तात्त्विकातात्त्विकभेदस्य प्रामाण्येऽदर्शनात्। कल्पितं सर्वं सर्वदा अप्रामाणिकमेव। तत्त्वज्ञानोदयादनन्तर तदप्रामाणिकत्वं विज्ञायत इत्येतत्तु तत्त्वम्। त्वन्मते तु तदाऽप्यप्रामाणिकत्वविज्ञानं नास्ति, सर्वस्याप्यभावात्। पूर्वं तु प्रामाणिकत्वविज्ञानमेव। किञ्च–भवदप्यप्रामाणिकत्वविज्ञानं भवद्दृष्ट्याप्यप्रामाणिकम्। "तत्त्वज्ञानोदयात्प्राक्" इति च विपरीतम्। नहि तत्त्वज्ञानोदयादनन्तरं तात्त्विकप्रामाण्ययुक्तं भवति। अनवस्थाङ्गीकारे आपादितमाध्यमिकपक्षप्रसङ्गपरिहारप्रयासोपि व्यर्थ एव। नच भ्रमबाधयोस्साधिष्ठानत्वसावधित्वदर्शनादधिष्ठानपारमार्थ्यमिति वाच्यम्। तावताप्यनिस्तारात्। नहि माध्यमिकेनापि भ्रमस्य साधिष्ठानत्वनियमस्त्यज्यते। अपारमार्थिकाधिष्ठानस्याभ्युपगमात्। अनवस्था तु भवतापीष्यत एव। नच तथापि बाधावधितत्त्वज्ञानाभ्युपगमात् न माध्यमिकपक्षप्रसङ्गः। तैश्च न तत्त्वं किञ्चिदभ्युपगम्यते। येन तज्ज्ञानस्य भ्रमबाधावधित्वमुच्येतेति वाच्यम्। दर्शनानुरोधेन परमार्थतत्त्वाधिष्ठानकत्वाङ्गीकारे तेनैव दर्शनेन परमार्थदोषतदाश्रयादीनामप्यङ्गीकारापत्तेः। दर्शनानुरोधे यथादर्शनमेवाङ्गीकार्यत्वात्। नच श्रुत्या ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं, तन्निवृत्तिश्च ब्रह्मतत्त्वज्ञानेनैवेत्यवगम्यत इति वाच्यम्। सोपबृंहणभेदाभेदघटकसर्वश्रुत्यैककण्ठ्येन विशिष्टाद्वैतसिद्धान्त एव सिद्ध्यतीति चिदचिच्छरीरकब्रह्मसिद्धिरूप-

विजयप्रथमभागे पूर्वमेवास्माभिस्सविस्तरं निरूपितत्वात्। इहाप्युपरि प्रमाणानुपपत्तिनिरूपणप्रकरणे उपपादयिष्यमाणत्वाच्च। नहि कुत्रापि श्रुतौ, जगद्भ्रमो ब्रह्मणः, तन्निवृत्तिस्तज्ज्ञानादिति श्रूयते॥

इदमत्रावधेयम्।—"सत्ताबोधावधि बाधानुभवाच्च सच्चिदात्मैवाधिष्ठानम्" इति वदन्ति परे। सच्चिदात्मा शुक्तिस्थानीयोऽधिष्ठानं चेत्, शुक्तौ शुक्तित्वमिव सति कोयमाकारोऽभ्युपगम्यते, यज्ज्ञानेन रजतभ्रम इव शुक्तित्वज्ञानेन जगद्भ्रमो निवर्तेत। सतो निर्विशेषत्वमेव चेत् कथ शुक्तिस्थानापन्नत्वम्। किञ्च—शुक्तिस्थानापन्नसत्ताबोधात् कथ भ्रमनिवृत्तिः?। नहि शुक्तिस्वरूपज्ञानात् रजतभ्रमनिवृत्तिः। अहो तेषा स्वविपरीतलोकदृष्टान्तावलम्बनेन लोकविरुद्धाप्रामाणिकार्थसाधनप्रयासव्यसनिता—इति॥

यदप्यत्र—(७० पु) श्रुतप्रकाशिकोक्तमनूद्य तत्परिहारोऽभिनीयते, "यत्तूक्तं व्याख्यात्रा—प्रवाहानादित्वे जीवनित्यत्वादिविरोधात् प्रतिवक्तव्यम्। स्वरूपानादित्वेपि काल्पनिकत्वे जीवादिवदेव कल्पनामूलदोषान्तरापेक्षायामनवस्थैव। अन्यथा काल्पनिकस्यैव स्वरूपानादितयाऽधिष्ठानान्तरनिरपेक्षस्य सर्वकल्पनाधिष्ठानत्वप्रसङ्गेन माध्यमिकपक्षप्रसङ्गः इत्युक्तम्। तदेतत् जीवस्यैव स्वरूपानादित्ववर्णनेन स्वस्य स्वकल्पकत्वोपपादनेन, बाधावधिभूताधिष्ठानतत्त्वप्रसाधनेन च प्रत्युक्तमेव" इति। अत्र प्रतिवदामः। श्रुतप्रकाशिकोद्भावितदूषणपरिहाराभिप्रायेणोपन्यस्तं हेतुत्रयमपि प्रागेव सम्यङ्निराकृतम्। अथापि स्मारयामः। जीवस्य स्वरूपानादित्वे काल्पनिकत्वं न स्यात्। जीवब्रह्मणोरुभयोर्वा भवदभिमताना षण्णां वा स्वरूपानादित्वे तुल्ये एकस्य पारमार्थ्यं, अन्येषामपारमार्थ्यमित्यत्र न गमकमस्ति।

लोकदर्शनं तु भवतां विपरीतमेव। अधिष्ठानस्येव दोषतदाश्रयादीनामपि पारमार्थ्यावश्यंभावात्। प्रत्यक्षोपजीव्यनुमानमपि नाधिष्ठानातिरिक्तमिथ्यात्वसाधकं स्यात्। नचापि शास्त्र तत्साधकं पश्यामः प्रतिपादयिष्यामश्चोपरिष्टात्। काल्पनिकत्वेनैव चेदज्ञानजीवभावादेरनादित्वमिष्यते — अथापि कल्पनामूलभूत-दोषान्तरावश्यभावात्, तस्याप्यपारमार्थ्ये तत्कल्पनामूलदोषान्त-रापेक्षया अनवस्था दुरुद्धरैव। किञ्च-पूर्व "अनवस्था न दोषाय। अनवस्था आस्तां नाम" (६९-पु) इत्युक्त्वा पुनरत्र तत्परिहारप्रयासः कथ घटताम्। वस्तुतः उक्तरीत्या न सा परिहृता च। स्वस्य स्वकल्पकत्वमपि दुरुपपादमेव। स्वकल्पकमूलदोषाभावादेव। स्वस्यैव चेत् दोषत्वं—तर्हि स्वस्य कल्पितत्वं न स्यात्। नहि लोके शुक्ति-रजतस्थले रजतस्येव तत्कल्पनामूलभूतदोषस्यापि कल्पितत्वं दृश्यते। बाधावधिभूततत्त्वप्रसाधनं च दुश्शकमेव। लोके हि शुक्तिस्वरूप-ज्ञानमात्रेण न रजतभ्रमनिवृत्तिः। किन्तु शुक्तित्वाकारेण ज्ञान एव तन्निवृत्तिर्दृश्यते। न तथात्र निर्विशेषभवदभिमततत्त्वज्ञानमात्रात् जगद्भ्रमनिवृत्तिस्संभाव्येत। वस्तुतो जगन्मिथ्यात्वस्यैवासिद्धेः बाध एवाप्रसिद्धः। ब्रह्म च नाधिष्ठानं भवितुमर्हति। अतः त्वदुक्तहेतु त्रितयमपि दुष्टमिति श्रुतप्रकाशिकोक्तदूषणान्यपरिहरणीयान्येवेति सिद्धम्॥

यदप्यत्रैव (७०-पु) "जीवस्याज्ञानदोषमूलत्वं नाभ्युपगम्यते। तस्यानादित्वात्॥ कितु तदधीनस्थितिकत्वमेव। नचैवं परस्परसापेक्षस्थितिकत्वेन परस्पराश्रयप्रसङ्ग इति वाच्यम्। द्रव्यत्वगुणवत्त्वयोरिव परस्परस्थितिप्रयोजकतया परस्परसापेक्षत्वरूप-परस्पराश्रयत्वस्यादोषत्वात्" इत्याद्युक्तम्। स्ववाग्विरोधादिना सर्वमिदं पराहतम्। अत्र जीवस्याज्ञानाधीनस्थितिकत्वमुच्यते। पूर्वं

(५४-पु) "जीवस्याज्ञानाधीनस्थितिकत्वानङ्गीकारेण" इत्युक्तम्। उपरि च (७१-पु) "जीवस्याज्ञानाधीनस्थितिकत्वं नोपेयते" इति त्वयैव वक्ष्यते। इदं च परस्परविरुद्धमिति स्फुटम्। किञ्च—स्थितौ परस्परसापेक्षत्व नास्तीति तद्दोषत्व पूर्वमुक्तम्। इदानी स्थितौ परस्परसापेक्षत्वस्यादोषत्वमङ्गीक्रियते। इदमपि विरुद्धमेव। अपिच—जीवस्याज्ञानरूपदोषमूलत्व नास्ति। तदधीनस्थितिकत्वमेवेति कथनमसम्बद्धम्। जीवस्येत्यत्र जीवत्वविशिष्टस्येत्येव हि वक्तव्यम्। तत्र जीवत्वस्य दोषाधीनस्थितिकत्वं चेदङ्गीक्रियते, तदा तदितरजगतो दोषमूलत्वमपि तादृशमेव हि वक्तव्यम्। तथाच जीवस्येति को विशेषः। सर्वमपि दोषमूलं न भवतीत्येव वाच्यम्। नच जीवत्वविशिष्टस्याऽनादित्वेन तथाऽङ्गीकारः, तदितरजगतस्तु अनादित्वाभावादुत्पत्तिमत्त्वाबाधात् दोषमूलत्वमेवाङ्गीक्रियते इति वाच्यम्। भ्रमस्थले विषयोत्पत्तेरसम्भवात्। नहि शुक्तौ रजतमुत्पद्यते। तथा सति प्रतिपन्नोपाधौ त्रैकालिकनिषेधार्हत्वरूपभवदभिमतमिथ्यात्वस्यैव बाधात्। तथाच जगतस्सत्यत्वमेव सिद्धम्। द्रव्यत्वगुणवत्त्वोदाहरणमपि न साधकम्। नहि तत्र परस्पराधीनस्थितिकत्वमस्ति। द्रव्यत्वं हि नित्यम्। उत्पत्तिक्षणे च गुणो नास्तीति तार्किकाः। तथाच तत्र परस्पराधीनस्थितिकत्वं बाधितमेव। इदं च पूर्वमेवोपपादितं ५६-पुटस्थविषयविमर्शावसरे (२०-२१ पुटयोः)॥

यदत्र (७०-७१-पु) "जीवत्वस्याज्ञानस्थितिनियामकत्वे 'निरवद्य'मिति ब्रह्मणो निर्दोषत्वावगमेनाज्ञानाश्रयत्वानुपपत्त्या ब्रह्मण्यज्ञाननिवारणमेव प्रयोजनम्। निरवद्यत्वश्रुतिर्वास्तविकनिर्दोषत्वपरेति संकोचे च प्रमाण नास्ति। जीवोपि वस्तुतो निर्दोष एव। वस्तुतस्तु जीवस्याज्ञानाधीनस्थितिकत्वं नोपेयते। असंभवात्। तस्य शुद्धचिद्वृत्तित्वेन अविद्यावद्वृत्तित्वाभावात्। परस्पराधीनता तु घटतद-

वच्छिन्नाकाशयोरिव समानकालीनयोरवच्छेद्यावच्छेदकभावेनापि निर्वोढुं शक्यते। तदुक्तम्—"स्वेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकम्। तथा जीवाश्रयाविद्या मन्यन्ते ज्ञानकोविदाः॥" इति।" इत्युक्तम्—तदिदं पूर्वापरस्ववाग्विरोधादिना प्रत्याख्यातम्। तथाहि—"अज्ञानस्य ब्रह्मणि निषेधार्थमेव जीवत्वस्याज्ञानस्थितिप्रयोजकत्वाङ्गीकारः" इतीद, ५७-पुटे "अज्ञानस्य शुद्धब्रह्माश्रयत्वमपि युक्तमेव" इति, ६०-पुटे च "युक्तमज्ञानाश्रयत्वं शुद्धचितः" इति च भवदीयवाक्यव्याहतमिति स्फुटम्। निरवद्यत्वश्रुतिसंकोचकप्रमाणाभावकथनं च न घटते। यदि 'निरवद्य'मित्यस्याः श्रुतेः पारमार्थिकावद्यनिषेधपरत्वं नास्ति। पारमार्थिकापारमार्थिकभेदमन्तरा सामान्यतः अवद्यनिषेधपरत्वमेवेत्युच्यते-तदाऽपसिद्धान्तः। ब्रह्मणः आविद्यकसर्वदोषाश्रयत्वं हि सर्वाद्वैतिसिद्धान्तः। जीवाज्ञानवादिनामपि जीवभावरूपदोषस्य ब्रह्माश्रितत्वं ह्यभिमतम्। जीवस्यापि वस्तुतो निर्दोषत्वमित्यप्यसङ्गतम्। जीवत्वविशिष्टे वास्तविकदोषाभाववत्त्वं चेत्, अज्ञानेपि तदभाववत्त्वं तुल्यमेव। किञ्च—भवन्मते वास्तविकदोषस्यैवाप्रसिद्धया वास्तविकनिर्दोषत्वमेव शशशृङ्गतुल्यम्। यदि च वास्तविकत्वं दोषाभावेऽभिमतं, तथापि तादृशदोषाभाववत्त्वस्य स्वरूपत्वेऽतिरेके वा उभयथाप्यज्ञानविरोधित्वाभावात् काल्पनिकाज्ञानवत्त्वेपि निरवद्यश्रुतिविरोधो दुर्वच एव। भवन्मते हि विषमसत्ताकयोर्विरोधो नास्ति। ६०-पुटे च—"विषमसत्ताकयोः भावाभावयोरविरोधेन" इति त्वयापि ह्युक्तम्। ५६-पुटे—"जीवत्वाविद्यावत्त्वयोरेकमविद्याविशिष्टं चैतन्यमधिकरण"मिति वदता त्वयैवात्र, "जीवत्वस्य शुद्धचिद्वृत्तित्वेनाऽविद्यावद्वृत्तित्वाभावात" इति त्वदुक्तं प्रत्याख्यातमित्यहो व्याहतभाषित्व भवताम्। अज्ञानजीवभावयोरवच्छेद्यावच्छेदकभावश्च न घटत इति च पूर्वं निपुणं निरूपितमेव। विस्तरस्तु परमार्थभूषणे (८३४-८३५ पुटादिषु

द्रष्टव्यः। "स्वेनैव कल्पिते देशे" इत्याद्युदाहरण तु—"प्रतिपन्नो घटाकाशसम्बन्धः परमार्थतः। न तथा प्रकृतेऽस्तीति जानन्त्यज्ञानिनो न हि॥" इति प्रत्याख्यातम्॥

अविद्यादुर्घटत्वदौर्घट्योपपादनावसरे — "उपपत्तिनिरपेक्षत्वरूपं दुर्घटत्वमपारमार्थ्यसाधकं चेत प्रपञ्चस्यापि अपारमार्थ्यात् मूलदोषापेक्षा न स्यात। दुर्घटत्वेन उपपत्तिनिरपेक्षत्वात्। निवर्तकज्ञाने सत्यपि प्रपञ्चसत्त्वापत्तिश्च। विरोधान्न तिष्ठेदिति चेत् तर्हि दुर्घटत्वं परित्यक्त स्यात्। उपपत्तिसापेक्षत्वात्। ननु-पारमार्थ्यप्रयुक्तत्वापारमार्थ्य-प्रयुक्तत्वभेदभिन्नोपपत्तिद्वैविध्ये पारमार्थ्यप्रयुक्तोपपत्तिनिरपेक्षत्वमेव दुर्घटत्वम्। तदत्र प्रकृतेऽक्षनम्। अपारमार्थ्यप्रयुक्तोपपत्तिस्तु अपेक्ष्यत एवेति प्रकृते प्रपञ्चस्यापारमार्थ्यप्रयुक्तमूलदोषापेक्षाऽवर्जनीयैवेति तन्मूल-दोषकल्पनं युक्तमेवेति चेत्-तर्हि अपारमार्थ्यप्रयुक्तोपपत्तिरूपदोषापेक्षा अपरमार्थभूतप्रपञ्चमूलदोपस्याप्यवर्जनीयैवेति अनवस्थातादवस्थ्यमेव" इत्यादिक श्रुतप्रकाशिकोक्त, तथा ब्रह्माज्ञानवादिमतेप्येतत्सर्व तुल्यमित्युप पादकमुपरितनश्रुतप्रकाशिकाभाग च किञ्चित्किञ्चिदनूद्य तद्दुदूषयिषया यत्तूक्तं (७१—पु)— "तदिदं तान्त्रिकस्य परकीयसिद्धान्तरहस्य-मविज्ञाय परानभिमतपक्षान् अनूद्य दोषोद्भावनं मुग्धशिष्यजनमोह-नेन स्वगोष्ठीगरिष्ठत्वख्यापनार्थमेव। नास्माभिरुपपत्तिसामान्यशून्यत्वं दुर्घटत्वमित्युच्यते। अपितु सत्त्वादिज्ञापकयुक्तावुपपत्तिराहित्यमेव। तच्चाज्ञानस्यानिर्वाच्यत्वोपपादकत्वेनैव स्वीक्रियत इतीदमेव दुर्घटत्वमज्ञा-नस्य" इत्यादिकम्। तदिदं सर्वं प्रत्यक्षादिप्रमाणविधुरतद्विरुद्धस्व-कपोलैककल्पितानुवादानर्हदुर्घटार्थैकपरस्य सोपबृंहणश्रुतिप्रतिपन्नार्थतत्त्व-निर्धारणविधुरस्य परस्परव्याहतैकभाषणव्यसनिनः, श्रीमन्नारायणापराव-तारभगवद्व्यासमुनिप्रणीतश्रीमहाभारतादिप्रशंसितप्रमाणतल्लजश्रीपाञ्चरात्र-

शास्त्रप्रद्वेषमूर्तेः, श्रीभाष्यकारादिव्यक्तिदूषणपरायणस्य तवाज्ञानमात्र विलसितम्। नास्तिकेत्याद्येवंरूपेण न केवलं श्रीभाष्यकारादीन्, श्रीव्यासबोधायनादीनपि दूषयता त्वयाऽऽत्मा लघुतां शोचनीयतां च नीयत इति परं विषीदामः। न केवलमत्रैव, एतत्कृतौ प्रायेण बहुषु स्थलेषु एवमेव दूषणं दृश्यते। विषयविचारमात्रे प्रयतितव्यम् न दूषणे। अस्तु नाम। विषयविचार एव वयं प्रवर्तामहे। श्रुतप्रकाशिकाया दुर्घटत्वविषये बहून् पक्षभेदान् विकल्प्य सर्वे ते सयुक्तिकं दूषिताः। सर्वेपि ते पक्षाः अद्वैतिभिरङ्गीकृता वा न वा स्युः। वादसरणिरियमिति व्युत्पन्नो भव। संभाविताः सर्वेपि पक्षा विकल्प्य दूषणीया एव। भवद्भिर्नाङ्गीक्रियते चेत् किं तावता स पक्षो न दूष्यः। 'नहि वस्तुनि विकल्पो युज्यते' इत्युक्तरीत्या परस्परविरुद्धबहुपक्षोपक्षेपकाश्च भवन्तो भवदीयाश्चेत्यत्रैव त्वत्कृतौ दृश्यते। "ब्रह्माज्ञानवादः, जीवाज्ञानवादः, विवरणमतम्, वाचस्पति मिश्रमत"मित्यादिकं पश्यतामिदं स्पष्टम्। श्वो जनिष्यमाणोपि कंचित्पक्षं प्रकल्पयेत्। स्थितपूर्व एव पक्षः पाश्चात्यदूषितत्वात् कालेन विलीनो भवति, कोवा जानाति नेति अतो विचारकुशलाः संभावितसर्वपक्षोल्लेखं कृत्वैव प्रदूषयेयुः।

किञ्च—श्रुतप्रकाशिकापि नोपपत्तिसामान्यशून्यत्वविचारमात्रेण विश्रान्ता। उपरि परमार्थत्वप्रयुक्तोपपत्तिविशेषनिरपेक्षत्वरूपदुर्घटत्व-कल्पमप्याशंक्य विशेषतो दूषयति। किं तत्र भवतश्चक्षुर्न प्रसरति येन "न ह्यद्वैतिभिरुपपत्तिसामान्यशून्यत्वं दुर्घटत्वमित्युच्यते" इति दूषणे संरंभः क्रियते। अद्वैतसिद्ध्युक्तसत्त्वादिप्रापकयुक्त्युपपत्तिराहित्य-रूपदुर्घटत्वमप्यत्रैव हि पर्यवस्यत्यन्ततः। "अनुपपत्तिस्वीकारः न कुलधर्मः। किंतु परिहर्तुमशक्याऽनुपपत्तिरनिर्वाच्यताख्यापकत्वेन स्वीक्रियते" इति हि सिद्धिव्याख्या। सत्त्वादिप्रापकयुक्तावुपपत्तिः

परमार्थत्वप्रयुक्तैवेति तादृशोपपत्तिशून्यत्वमेवाधिष्ठानापारमार्थ्येऽपि स्वाभिमतयत्किञ्चिद्रूपदुर्घटत्वाश्रयणेनाधिष्ठानानवस्थापरिहारस्य सुकरत्वेन माध्यमिकपक्षप्रसङ्गेन श्रुतप्रकाशिकाया दूषितमिति ॥

यदत्र—( ७२-पु ) "सत्त्वासत्त्वाभ्यां विचारासहत्वे सति सदसत्त्वाभ्यां यद्विचार न सहते तदेव दुर्घटत्वम्" इति पक्षान्तरमुपक्षिप्तम्, तदपि दुर्घटमेव। इदं ह्यद्वैतसिद्धौ अनिर्वाच्यत्वलक्षणोपपत्तिप्रकरणे उक्तमस्ति। तत्र च सत्त्वासत्त्वाभ्यां विचारासहत्वे सति सदसत्त्वेन विचारासहत्वमित्येवोक्तं दृश्यते। नतु त्वदुक्तरीत्या "सदसत्त्वाभ्या"मिति। तथा सति पौनरुक्त्यात्। नहि सत्त्वासत्त्वाभ्यां विचारासहत्वमित्यतः सदसत्त्वाभ्या विचारासहत्वमित्येतद्भिन्नार्थम्। सदसत्त्वाभ्यामित्यस्यापि सत्त्वासत्त्वाभ्यामित्येव ह्यर्थः। अन्यथा सदसत्त्वाभ्यामिति द्विवचनानुपपत्तेः। सिद्ध्युक्तमन्यथैवानूद्यते अज्ञानसरभादिनेत्येतदास्ताम्। यन्न सहते तदेवेत्यपि न स्वरसम्। ईदृशं च दुर्घटत्वं सत्त्वेनाप्युपपादयितुं असत्त्वेनाप्युपपादयितुं सदसत्त्वेन वाप्युपपादयितुमशक्ये अज्ञानशुक्तिरूप्यप्रपञ्चादौ हि भवतामभिमतम्। शुक्तिरूप्यादौ प्रतीतिबाधाभ्यां सत्त्वासत्त्वे न भवतः। ब्रह्मतुच्छयोस्तु बाधस्य प्रतीतेर्वाऽभावात् सत्त्वासत्त्वे। अज्ञानादिकं च प्रतीत्या ब्रह्मप्रमाबाध्यत्वेन च सत्त्वेन वाऽसत्त्वेन वाऽविचार्यमेवेति प्रत्येकं सत्त्वासत्त्वाभ्यां विचारासहत्वेपि तस्य सदसत्त्वेनाविचार्यत्वं तु सर्वथा दुरुपपादमेव। सदसन्नाम कश्चित्पदार्थः नहि लोके दृश्यते। यदि एकस्यैव घटादेः उपाधिभेदेन सत्त्वासत्त्वयोरुपलंभात् सदसद्रूपः पदार्थः प्रसिद्ध इत्युच्यते—तर्ह्यसन्मतप्रवेशः। ब्रह्मणोपि हि 'सदेव', 'असदेव' इत्यादावुभयविधश्रुतिप्रामाण्यात् सदसत्त्वे संभवतः। किञ्च—प्रत्येकं सत्त्वासत्त्वाभ्यामविचार्यमित्यपि न संगच्छते। "परस्पर-

विरोधे हि न प्रकारान्तरस्थितिः" इति हि न्यायविदः। देश-कालाद्युपाधिभेदमन्तरा सत्त्वासत्त्वोपपादनं हि दुष्करमेव। अन्यथा जैनमतविजयप्रसङ्गात्। प्रपञ्चादौ बाध्यत्वं बाधितम्। शुक्तिरूप्यादौ चान्यत्र सत एवान्यत्र भानमिति वा भेदाग्रहेण वोपपत्तिः। अविद्याख्यं चाज्ञानं कर्मरूपमिति च प्रामाणिकम्। तथाच सत एव वस्तुनः उपाधिभेदेन सत्त्वासत्त्वे प्रतीयेते, न तु तुच्छस्य। ततश्च सर्वथा सदसत्त्वेन सत्त्वासत्त्वाभ्यामविचार्यत्वरूपं दुर्घटत्वं शशशृङ्गायमाणमेव। यस्तु सिद्धौ पारिभाषिकसत्त्वासत्त्वादिपरिष्कारादिना परस्परविरोधपरिहारप्रयासः, स सर्वोऽपि शतदूषणी-तद्व्याख्या-परमार्थभूषणादौ विस्तरेण निराकृत इति तत्रैव द्रष्टव्यम्। इत्थच सिद्ध्यवलम्बनेनापि तव नाभिमतसिद्धिरिति अनाकलितवेदान्त-हृदयेन त्वया यद्गर्जितम् तदकाण्डताण्डवं पर्यवसन्नम्। इदं च दूषणं त्वया (७२-पु) श्रुतप्रकाशिकाविषये प्रयुक्तं तत्र लगितुमसमर्थं सत् त्वामेवाभिसरतीति मन्तव्यम्। नास्माभिरकाण्डेऽत्र दूषणं प्रयुज्यत इति तत्त्वम्॥

यदत्रैव (७२-पु)—चित्सुखोक्त्युदाहरणं, "प्रत्येकं सदसत्त्वाभ्यां विचारपदवी न यत्। गाहते, दुर्निरूपञ्च तदेवाहुर्मनीषिणः॥" इति, तत्—

"सत्त्वासत्त्वे प्रतीयेते ह्येकत्रोपाधिभेदतः।
तद्विलक्षणमेवात्र वस्तु वन्ध्यासुतायते॥" इति परास्तम्॥

यदपि चात्रैव (७२-पु)-अथवेत्यादिना "प्रमाणयुक्त्याघात न सहते" इत्यनुपपन्नत्वप्रतिपादनम्—तदत्यन्तोपहास्यम् सौगतादि-सर्वमतविजयप्रसङ्गात्। सर्वेऽपि हि ईदृशानुपपन्नत्वमाश्रित्य स्वस्वाभि-

मतमतप्रतिष्ठापनतत्परा भवेयुः। किञ्च —प्रमाणयुक्त्याघातमज्ञानादिकं न सहते। ब्रह्म च न साक्षात्प्रमाणविषयः। तथाच सर्वप्रमाण-वैयर्थ्यमेव भवन्मते ॥

यदप्यत्रैव (७२-पु)—अज्ञानस्य काल्पनिकत्वेन, काल्प-निकत्वस्य च कल्पनामूलभूतदोषान्तरं विनाऽनुपपद्यमानत्वात्, दोषान्तरकल्पने चानवस्था दुस्त्यजा। अज्ञानकल्पनाऽनादिरेव। अतो दोषान्तरकल्पनानैरपेक्ष्यमिति नानवस्थेति चेत्—कल्पनाया वा कल्पितस्य वाऽनादित्वं दुर्वचम्। दोषमूलप्रतिभासविषयत्वं हि काल्पनिकत्वम्। तदभावेऽज्ञानादेः काल्पनिकत्वमेव दुस्साधम्। अतः काल्पनिकत्वा-नादित्वयोर्विरोधादज्ञानं काल्पनिकमनादीति न सङ्गतमित्यनुयोगे—

"बाधितत्वेनैव कल्पितत्वोपपत्तिः। न तु दोषमूलत्वेन कल्पितत्वानुमानम्। कल्पितत्वं च सादित्वेऽप्रयोजकम्। अनादित्वं चाज्ञानस्य धर्मिग्राहकप्रमाणसिद्धम्। ततस्सादित्वे सति काल्पनिके कार्ये कारणापेक्षायां दोषो हेतुरिति व्यवस्थामात्रमेव क्रियते। ततश्चाज्ञा-नस्य सादित्वासिद्धेर्मूलस्यैवाकल्पनीयत्वान्नानवस्था" इत्यादिकमुक्तं—तत्सर्वं पूर्वमेव पराहतम्। पुनरपि स्मारयामः। प्रपञ्च(परिणाम)हेतुत्वेन भव-दभिमताज्ञानं भावरूपमप्रसिद्धमप्रामाणिकम्। "अविद्या कर्मसंज्ञान्या" इत्यादिप्रमाणप्रसिद्धं तु अज्ञानं न केवलज्ञानबाध्यम्। प्रत्यक्षादि-निखिलप्रमाणागम्यं विरुद्धं भवदीयमज्ञानमिति चोपरिष्टात्प्रमाणानुपपत्ति-प्रदर्शनप्रकरणे स्पष्टीभविष्यति। एवंच बाधितत्वेन कल्पितत्वं नोपपद्यते। किञ्च—बाधितत्वेन कल्पितत्ववत् कल्पितत्वादेव बाधितत्वमित्यपि वक्तुं शक्यते। वस्तुतः कल्पितत्वे बाधितत्वे वा दोषमूलत्वमेव प्रयोजक-मास्थेयम्। अन्यथाऽऽपणस्थरजतापेक्षया शुक्तिरजतस्य उपलब्धिसाम्येपि कल्पितत्वबाध्यत्वप्रयोजकं दोषमूलत्वमन्तरा वैलक्षण्यस्य दुर्निरूपत्वात्।

ततश्च दोषजन्यकल्पनाविषयत्वरूपकल्पिततत्त्वस्य सादित्वप्रयोजकत्वमक्षतमेव। यदि दोषः अनादिः, तत्कल्पना चानादिरित्युच्यते, तथापि दोषजन्यत्वानभ्युपगमेपि दोषाधीनस्थितिकत्वाभ्युपगमात्, स्वपरनिर्वाहत्वे च प्रपञ्चस्यैव तत्स्वभावोपपत्त्याऽज्ञानवैयर्थ्यप्रसङ्गात्, दोषान्तरावश्यंभावे चाऽनवस्थातादवस्थ्यमेव। किञ्च—अनादित्वं धर्मिग्राहकमानसिद्धमित्यपि न साधु। यत्र प्रमाणेऽज्ञानस्यानादित्वं सिद्ध्यतीत्युच्यते, तत्रैव कल्पितत्वानुक्त्याऽकल्पिततत्त्वमपि सिद्ध्यत्येव। तथा च कल्पितत्वं धर्मिग्राहकमानबाधितमिति फलति। नहि कुत्रापि शास्त्रे कल्पितत्वमुपदिश्यते प्रकृत्यादेः प्रपञ्चस्य। प्रत्युत नित्यत्वेनाकाल्पनिकत्वमेव हि "य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय" इत्यादिश्रुतौ जोघुष्यते। इत्थं च भवदभिताज्ञानस्य काल्पनिकस्यानादित्वं विरुद्धम्। अनादित्वेपि दोषान्तरसापेक्षत्वध्रौव्यात् अनवस्था दुरपह्नवैवेति सिद्धम्॥

यदपि चात्रैव (७२–पु)"अनादेर्जीवस्य काल्पनिकत्वं दोषसहभावमात्रेणैव, न तु दोषमूलत्वेन। अविद्यानाशस्य जीवत्वनाशव्यापकत्वोपगमेनाऽन्योन्याधीनतामात्रोपगमात्। अधिष्ठानापारमार्थ्ये चाधिष्ठानान्तरापेक्षाऽवर्जनीया। नात्र स्वपरनिर्वाहकत्वेनानवस्थानिस्तारः। कल्पितस्याधिष्ठानत्वायोगात्। कल्पितं ह्यवस्तु। अतः पारमार्थिकाधिष्ठानापेक्षा नियतेति न शून्यवादप्रसङ्गः" इत्यादि—तदपि न समीचीनम्। दोषसहभावमात्रेण चेत् जीवभावस्य कल्पिततत्त्वं कल्प्यते, तदा ब्रह्मणोपि तत्सहभावात् काल्पनिकत्वं दुर्वारमेव। ब्रह्माज्ञानयोर्द्वयोरपि अनादिसहभावसत्त्वात्। नच—सहभावः एकाधिकरणवृत्तित्व, तच्च जीवभावाज्ञानयोर्ब्रह्मान्तर्भावेणास्ति। न ब्रह्मणो निराधारस्याज्ञानसहभाव इति वाच्यम्। अज्ञानाधीनस्थितिकत्वेन जीवभावं प्रत्यज्ञानस्येव, जीवभावाधीनस्थितिकाज्ञानस्यापि जीवभावसहभावनैयत्येन

जीवभावमूलकत्वसंभवात् अज्ञानं प्रत्यपि जीवभावस्य दोषत्वापत्तेः। तथाचाज्ञानकल्पितो जीवभाव इतिवत् जीवभावकल्पितमज्ञानमित्यपि स्यात्। किञ्च—अज्ञानस्य स्वपरनिर्वाहकत्वे अधिष्ठानस्यापरमार्थस्यापि तत्संभवात् माध्यमिकपक्षप्रसङ्गो दुष्परिहर एव। अवस्तुत्वेन काल्पनिकं नाधिष्ठानं भवेदिति चेत्—अपारमार्थिकाज्ञानादेरपि अवस्तुत्वात् दोषत्वादिकमसंभावनीयमेवेति तुल्यमेव। पारमार्थिकाधिष्ठानापेक्षेव पारमार्थिकदोषतदाश्रयाद्यपेक्षापि तुल्यैव हि। अतो वैदिकपक्षपरिग्रहः शोभनः, तत्परित्यागे च शून्यवादप्रवेशः। न त्वन्तराले त्रिशङ्कुरिव स्थातुं युज्यते शक्यते वा॥

यदत्र (७३-पु) "किञ्चाविद्यायाः स्वपरनिर्वाहकत्वमास्ताम्। तावता न दोषमात्रस्य काचादेः न स्वपरनिर्वाहकत्वातिप्रसङ्गः संभवति। नचैवमधिष्ठानापारमार्थ्येऽपि तुल्यमिति वाच्यम्। निरवधिक-बाधानुपपत्तेरेव। नहि स्वस्मिन्नेव स्वयं बाध्यते। कल्पनायाः शून्याधिष्ठानत्वे अभावानुविद्धा कल्पना प्रतीयेत। सदनुविद्धा तु प्रतीयते "घटस्सन् पटस्सन्नि"ति। तस्मात् सानवस्थादयो दोषा औपनिषदमते" इत्यादिकम्—तदपि सुतरामुपहास्यमेव। अविद्यारूपदोषस्य स्वपरनिर्वाहकत्वे काचादेरपि तथात्वापत्तिर्दुर्वारैव। नियामकाभावात्। स्वयमाग्रहवतापि दैवाविष्टेन त्वयैव "निर्दैवत्वेच्छया निद्रा"मिति न्यायात्, "न दोषमात्रस्य काचादेः न स्वपरनिर्वाहकत्वातिप्रसङ्गः" इति प्रकृतार्थदृढीकरणार्थकनञ्द्वयघटितं वाक्यं विलिखितम्। स्वपर-निर्वाहकत्वातिप्रसङ्गो भवत्येवेति हि तदर्थः। निरवधिकबाधादेव हेतोः अपरमार्थाधिष्ठानस्यापि स्वपरनिर्वाहकत्वापत्तिरपि दुर्वारैव। "नहि स्वस्मिन्स्वयं बाध्यते" इति तु, "नहि स्वेनैव शुक्तिरजतादिनाऽपरमार्थेन स्वयं कल्प्यते, स्वान्येन काचादिपरमार्थदोषेणैव हि कल्प्यते" इति प्रतिबन्द्या पराहतम्। शून्यमधिष्ठानमिति नोच्यते तैः। कल्पित-

मधिष्ठानमित्येव एतावता प्रसङ्गस्संवृत्तः। नहि शून्यं कल्पितमिति ते वदन्ति। तथाच "शून्याधिष्ठानत्वेऽभावानुविद्धा" इत्यादिरधिकः प्रसङ्गः। तथाप्युच्यते। प्रतीतेर्भावानुविद्धत्वात् भावाधिष्ठानत्वमेव, न शून्याधिष्ठानत्वमिति न, यतः—"घटो नास्ति पटो नास्ति, असन् घटः, असन् पटः" इत्यभावानुविद्धाया अपि प्रतीतेस्सत्त्वात् अभावाधिष्ठानकत्वमपि दुर्वारमेव। किञ्च — भावानुविद्धत्वादिकं भावाधिष्ठानकत्वे कथञ्चित् गमकमपि नहि तस्याधिष्ठानस्य काल्पनिकत्वाकाल्पनिकत्वादौ नियामकं भवितुमर्हति। औपनिषदमतेऽनवस्थादयो दोषाः न संभवन्तीत्येतत्तु सत्यम्। तद्दोषप्रसक्तिविधुरस्यौपनिषदमतस्य सद्भावात्। भवन्मतस्य उक्तप्रकारेण उपनिषद्वैदेशिकत्वात् सोपबृंहण सर्ववेदवैदेशिकत्वाच्च तत्रानवस्थादयो दोषा दुष्परिहरा एवेति न भवदभिमताविद्यास्वरूपमुपपद्यते॥

अविद्यायाः कल्पितत्वाद्याकारस्यानिरूपणात्।
स्वरूपानुपपत्तिश्चापरिहार्येत्युदीरितम्॥

॥इति तृतीयः परिच्छेदः॥

## ॥चतुर्थः परिच्छेदः—अनिर्वचनीयत्वानुपपत्तिः॥ (४)

१. सत्त्वासत्त्वद्विकोट्यन्तर्भूतत्वात्सर्ववस्तुनः।
तृतीयकोट्यप्रसिद्धेः सदसद्भ्यां विलक्षणम्॥

२. नैवास्ति तादृश वस्तु, तदनिर्वचनीयता।
अविद्याया दुर्वचैवेत्येतदत्र प्रपञ्च्यते॥

३. पारिभाषिकयोस्सत्त्वासत्त्वयोरुक्तयोरपि।
दुःस्थत्वं सर्वदैवेति तदप्यत्र निरूप्यते॥

"भवदभिमताज्ञानादेरनिर्वचनीयता च दुरुपपादा। सदसद्विलक्षणत्वमनिर्वचनीयत्वमिति तु न साधु। सदसद्विलक्षणतया लोके कस्यापि पदार्थस्याप्रतीतेः। सदसदाकारा हि सर्वा प्रतीतिर्दृश्यते। यादृशी प्रतीतिः, तस्या तादृश एव हि विषयो भवेत्। अन्यथा सर्वं सर्वप्रतीतेर्विषयस्स्यात्। अन्ततः भवदभिमतसदसद्विलक्षणप्रतीतेरपि सदसद्विषयकत्वापत्तेः। अतो यथाप्रतीति विषयव्यवस्था कार्या। ततश्च सदसदाकारायाः प्रतीतेस्सदसद्विषयकत्वमेवोचितम्, न तु सदसद्विलक्षणविषयकत्वम्। उक्तं हि ख्यातिविवेके, "नह्यन्यदवभास्यमन्यो विषयः। अवभासनव्यवस्थाप्यत्वं विषयस्य" इति। नच एकस्य विषयस्य सदसदाकारत्व व्याप्तिविरोधादनुपपन्नमिति वाच्यम्। यतस्तत एव हेतोरेकस्य तदुभयविलक्षणत्वमप्यनुपपन्नम्। सतोऽसद्वैलक्षण्यमसतस्सद्वैलक्षण्यमिति ह्युपपन्नम्। इयांस्तु विशेषः—सदसद्वैलक्षण्यमेकस्य न दृष्टम्। सदसदात्मकत्वं तु दृष्टमिति। उक्तं हि संवित्सिद्धौ — "नासत्प्रतीतेर्बाधाच्च न सत् इत्यपि यत् न तत्। प्रतीतेरेव सत्त्वं न, बाधान्नासत् कुतो जगत्॥" इति। वस्तुतस्तु सदसत्त्वयोरन्यतरदेवैकस्य स्यात्। न तूभयवैलक्षण्यम्। नच— एकमुभयं नेति न्यायात् सतोपि घटादेस्सदसद्वैलक्षण्य दृष्टमिति वाच्यम् ब्रह्मणोपि तादृशत्वप्रसङ्गात्। किञ्च—अस्तिधीविषयत्वं सत्त्वं, नास्तिधीविषयत्वमसत्त्वम्। एतदुभयं नैकस्य भवितुमर्हतीति तदुभयविलक्षणत्वमुपेयत इत्यपि वक्तुं न शक्यते। एवं सति सर्वत्र पूर्वपक्षसिद्धान्तप्रतीत्योर्मिथो विरुद्धाकारविषयत्वात् उभयाकारविलक्षण एवार्थः साध्य इति सिद्धान्तसमर्थनप्रयासो वृथायास एव स्यात्। तथाच भेदसुनिरूपत्वदुर्निरूपत्व — संवित्सत्यत्वमिथ्यात्व — जडत्वाजडत्व — नित्यत्वानित्यत्वादिवादेषु सर्वत्र पूर्वपक्षसिद्धान्ताकारोभयविलक्षणत्वमेव भेदसंविदादेः सिद्ध्येत्। अतो मिथो विरुद्धाकारप्रतीत्योः प्रति

पन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति न सदसद्विलक्षणत्वसिद्धिः। ननु तर्हि–असद्वैलक्षण्यमन्तरा कथं प्रतीतिः, सद्वैलक्षण्यमन्तरा कथं वा बाधः अज्ञानादिप्रपञ्चस्येति चेत्–न–अन्यथैव ख्यातिबाधयोरुपपत्तेः। तत्तत्ख्यातिवादिभिर्हि अन्यथैव तदुभयोपपत्तिरुपवर्ण्यते, न अनिर्वचनीयाश्रयणेन। यथार्थख्यातिपक्षे तु शुक्तिरजतस्वाभ्यार्थादौ सत्त्वात्, प्राचुर्याभाव—अस्थिरत्व—तदेकानुभाव्यत्वाग्रहाच्च ख्यातिबाधोपपत्तिः। इत्थमन्यथैवोपपत्त्या ख्यातिबाधाभ्यामनिर्वचनीयत्वकल्पनमसम्बद्धमेव॥" इत्येवं श्रीभाष्यश्रुतप्रकाशिकादौ विस्तरेणोपवर्णितामनिर्वचनीयत्वानुपपत्ति, (७३–७४–पु) प्रायेणान्यथाग्रहणात् अयथावदनूद्य (७४–पुटादारभ्य, ८०–पुटपर्यन्तं) तत्खण्डनप्रयासः परिगृहीतो दृश्यते। तत्र श्रीभाष्यश्रुतप्राकाशिकाद्युद्भावितदोषेषु नैकोपि दोष उद्धृत इति, अन्यथाग्रहणमस्तीति च इतःपरमुपपादयामः॥

श्रुतप्रकाशिकायां, सदसदाकारायाः प्रतीतेस्सदसद्रूपविषयकत्वमेवोचितम्, न तदुभयविलक्षणविषयकत्वमित्यस्मिन्नर्थे उदाहृतां ख्यातिविवेकोक्तिमन्यथागृहीत्वा, मिथोविरोधात्सदसद्विषयकत्वमेव नास्तीत्येतदर्थकत्वेनोदाहृततया लिखति विपरीतग्रहणस्वभावोऽयं परीक्षाकृत् भवान्। अस्तु नामैतत्॥

यदत्र (७४–पु) "नहि वयमस्तिधीविषयत्वरूपं सत्त्वम्। नास्तिधीविषयत्वं निषेधप्रतियोगित्वरूपमसत्त्वमनिर्वचनीयत्वशरीरप्रविष्टमिति ब्रूमः। अपि तु कालत्रयाबाध्यत्वरूपं सत्त्वम्। निस्स्वरूपत्त्वमसत्त्वम्। तदुभयवैलक्षण्यमनिर्वचनीयत्वमिति। सत्त्वं ब्रह्मण एव। "सत्यं ज्ञान" मित्यादिश्रुतेः। असत्त्वं तु शशशृङ्गादेरेव, निरुपाख्यत्वात्" इत्यादिकम्। तत्सर्वमेव निर्युक्तिकम्। तथाहि–कालत्रयाबाध्यत्वं हि कालत्रयबाधायोग्यत्वरूपम्। तत्र बाधः यदि विनाशरूपः तदा कालत्रयाबाध्यत्वरूपं

सत्त्वं प्रातिभासिकसाधारणं स्यात्। नहि प्रातिभासिकं कदापि विनश्यति। अनिर्वचनीयोत्पत्तिवादस्त्वप्रामाणिक इति वक्ष्यते। यदि चाप्रामाण्यज्ञानास्कन्दितज्ञानविषयत्वरूप इत्युच्यते तदा तदास्कन्दितज्ञानाविषयत्वरूपमेव सत्त्वमिति तत् घटपटादिप्रपञ्चसाधारणमेव। नहि घटपटादिज्ञानमप्रमाणमिति गृह्यते। श्रुत्या तु न ग्राह्यत इति च स्वावसरे वक्ष्यामः। किञ्च—अत्र कालत्रयबाधयोग्यत्वरूपप्रतियोग्यप्रसिद्धिश्च। नहि तादृशबाधयोग्यत्वमज्ञानादेः प्रपञ्चस्य भवदभिमतस्य स्यात्। व्यवहारकालेऽबाधितत्वेन वर्तमानत्वात्तेषाम्। नच—परमार्थतो न सन्तीति वाच्यम्–तर्हि कालत्रयेपि परमार्थतो नास्तीतिप्रतीत्यनर्हत्वरूपमेव तादृशबाधायोग्यत्वमिति तद्धटकपारमार्थ्यस्य प्रपञ्चव्यावृत्तस्य दुर्निरूपत्वात्। अत्र पारमार्थ्यं किं, (१) अविनाशित्वम्, (२) उताप्रतीयमानत्वम्, (३) अथवा बाधितत्वम्, (४) आहोस्वित् सार्वकालिकसत्ताश्रयत्वरूपम्, (५) उत अत्यन्ताभावाप्रतियोगित्वम्?। नाद्यः—जीवप्रकृत्योरपि तादृशसत्त्वस्य विद्यमानत्वेन सद्वैलक्षण्यायोगात्। "नित्यो नित्यानाम्" "नित्या सततविक्रिया" इत्यादिप्रमाणैः तयोरपि स्वरूपतोऽविनाशित्व-प्रतिपादनात्। न द्वितीयः–ब्रह्मण्यसंभवात्। तस्यापि प्रतीतिविषयत्वाङ्गीकारात्। अन्यथा प्रमाणवैयर्थ्यं स्यात्। इदं च प्रमाणानुपपत्तिप्रकरणे स्पष्टीभविष्यति। तुच्छसाधारण्याच्च। "असच्चेन्न प्रतीयेत" इति हि भवदीया प्रक्रिया। नच तृतीयः—अनन्वयात्। पूर्ववत् बाधः किंरूप इत्यादिविकल्पावताराच्च। नापि तुरीयः—पूर्ववत्प्रकृति जीवसाधारण्यादेव। किञ्च ब्रह्मण्यसंभवि चेद पारमार्थ्यम्। नहि मुक्तौ कालोऽस्ति, येन ब्रह्मणि सार्वकालिकसत्ताश्रयत्वरूहं परमार्थत्व मुपपद्येत। नापि पञ्चमः—ब्रह्मण्यसंभवादेव। न ह्यद्वितीयं निर्विशेषं ब्रह्म कुत्राप्यस्ति। येनात्यन्ताभावाप्रतियोगित्वं सम्पाद्येत।

तथा च कुत्रापि ब्रह्मणोऽसत्त्वात् अत्यन्ताभावप्रतियोगित्वमेवेति तत्र पारमार्थ्यं बाधितमेव। किञ्च—कालत्रयेपि परमार्थतः बाधायोग्यत्व सत्त्वमित्यत्र पारमार्थ्ये सत्त्वमित्येतावतैवालमिति अन्यन्निष्प्रयोजन मेवापतेत्। अपिच ब्रह्मण्यङ्गीक्रियमाणं सत्त्वं किं सत्यं, उत कल्पितम्? आद्ये किं स्वरूपं, अथातिरिक्तम्। आद्ये—ब्रह्मणोऽभावरूपत्वापत्तिः। त्रैकालिकबाधयोग्यत्वाभावस्सत्त्वमिति ह्युक्तम्। अन्त्ये—निर्विशेषे तदसभव एव। सत्यभूतस्य कस्यचिदपि धर्मस्य ब्रह्मणि भवद्भिरनङ्गीकारात्। द्वितीये च—प्रपञ्चसाधारणमेव सत्त्वमिति न सद्वैलक्षण्यं भवेत्। कल्पितं सत्त्वं प्रपञ्चेऽपि संभवेद्धि। निस्स्वरूपत्वरूपमसत्त्वमपि शशविषाणतुल्यमेव। किं निरुक्तमसत्त्वं कुत्रचित्प्रतीत, नवा। आद्ये-यत्र प्रतीतं तत्रैवासत्त्वं बाधितम्। ततश्चासत्त्वमप्रसिद्धमेव। अन्त्येपि स एव दोषः। एवं चोभयथाप्यसत्त्वाप्रसिद्ध्या तद्वैलक्षण्यमपि सुतरामप्रसिद्धमेव। किञ्च — ब्रह्मसत्त्वमबाध्यं, प्रपञ्चसत्त्वं तु बाध्यमित्यत्रापि नियामकं दुर्वचम्। अविशेषेणैव उभयोस्सत्त्वप्रतीतेः। नच शुक्तिरजतापणस्थरजतयोर्बाध्यत्वाबाध्यत्वे कथं व्यवस्थिते इति वाच्यम्। प्रवृत्तिविसंवादतदभावाभ्यामेव तत्र तदुपपत्तेः। नहि प्रकृते तथा वक्तुं शक्यते। किञ्च प्रपञ्चसत्त्वेऽबाध्यत्वमेव सुवचम्। घटादिप्रतीतेर्विसंवादाभावात्। घटादिविषयकप्रवृत्तिर्हि जलाद्याहरण रूपप्रयोजनवत्त्वेन सवदत एव। नच—शुक्तिरजतस्थले बाधकप्रमाणोपलंभात् बाध्यत्वं, तदनुपलंभात् सत्यरजतस्थले तदभावः। ब्रह्मप्रपञ्चविषयेप्येवमेवेति वाच्यम्। शुक्तिरजतादौ नेदं रजतमिति बाधकप्रत्ययोपलंभेऽपि प्रकृते प्रपञ्चे तथाऽनुपलब्धेः बाध्यत्वासंभवात्। नहि 'नायं घटः' इत्यादिबाधकमुपलभामहे लोके। नच लोके तदभावेपि श्रुतौ "नेह नानास्ति किञ्चन" इत्यादिबाधकमस्तीति वाच्यम्। तच्छ्रुतेः प्रपञ्चनिषेधार्थकत्वासंभवात्। इह—ब्रह्मणि नाना

नास्तीति हि ब्रह्मणि प्रपञ्चो निषिध्येत। तदा किञ्चनेति व्यर्थम्। अथ नानापदवैयर्थ्यमेव वा स्यात्। अन्यतरेणैव कृतार्थत्वात्। वस्तुतस्तु ब्रह्मणि ब्रह्मात्मकाब्रह्मात्मकभेदभिन्नप्रपञ्चनिषेधपरमिदं श्रुतिवाक्यम्। अधिकं परमार्थप्रकाशिकादावनुसन्धेयम्। इत्थं च ब्रह्मप्रपञ्चसत्त्वविषये बाध्यत्वाबाध्यत्वव्यवस्था दुरुपपादैवेति सिद्धम्॥

अपिच—प्रपञ्चस्य ख्यातिबाधाभ्यां विरुद्धं सदसद्वैलक्षण्यं न सिद्ध्येत्। अविरुद्धं तु तदुभयाकारत्वं सिद्ध्येत्। नचात्र विरोधः शङ्कनीयः। घटादेः ख्यातिबाधौ हि अनुभूयेते। कालदेशादिभेदेन विरोधः परिह्रियते। "तत्र घटोऽस्ति, अत्र नास्ति, तदाऽऽसीन्नेदानीं" इति हि ख्यातिबाधौ। शुक्तिरजतस्थले, 'नेदं रजत'मितिवत् घटोऽयमिति प्रत्ययानन्तरं न कदापि सत्यघटादिस्थले "नायं घटः" इति प्रतिपन्नोपाधौ निषेधधीरुदेति। येन तत्साजात्यं प्रपञ्चे साध्येत। नच तर्हि 'शुक्तिरजतं सदसदाकार'मिति न प्रतीयत इति वाच्यम्। सदसद्विलक्षणमित्यपि प्रतीत्यभावात्। यत्तु सत्त्वं, "यस्सदास्तीति केवल"मित्याद्युक्तरीत्या सततैकरूपत्वरूपं, यच्च तद्विपरीतमसत्त्वं, तदुभयं तु कालभेदेनाप्यपरिहार्यविरोधं नैकत्र भवितुमर्हति। अविनाशस्वभावे आत्मन्येव तादृशं सत्त्वं, विनाशस्वभावे देहाद्यचेतनवस्तुन्येव च तदसत्त्वमिति व्यवस्था तु सर्वाभिमतैव। नच "नासतो विद्यते भावः नाभावो विद्यते सतः" इति गीतावचनविरोध इति वाच्यम्। एवमस्य गीतावचनस्य सत्त्वासत्त्वसामानाधिकरण्यनिषेधपरत्वाङ्गीकारे भवतामपि एतद्वचनविरोधापत्तेः। न ह्यत्र वचने, असतः—निरुपाख्यस्य शशविषाणादेः सत्त्वं नेत्यर्थो निरूप्यते। "असत्त्वं घटादिरूपकार्यप्रपञ्चस्यैव" इति हि शांकरभाष्यव्याख्या अस्य श्लोकस्य। तथा च प्रपञ्चस्यासद्वैलक्षण्यं भवदुदाहृतगीतावचनेनैव प्रत्याख्यातं

भवति। वस्तुतस्तु—पूर्वोक्तरीत्या कालादिभेदेनाप्यपरिहार्यविरोधयोः सत्त्वासत्त्वयोरविनाशस्वभावत्वतद्विपरीतरूपयोरात्मनि देहे च प्रतिनियत तया वर्तमानत्वप्रतिपादनपरमेवैतद्वचनमिति श्रीगीताभाष्यादौ स्पष्टम्। एवं च देशकालादिभेदपरिहार्यविरोधयोस्सत्त्वासत्त्वयोरेकाधिकरणवृत्तित्वं नात्र वचने निषिध्यते। तथा ह्यनुगृहीतं—"यत्पुनस्सत्त्वासत्त्वसमुच्चय इत्युच्यते, तत् देशकालादिभेदेन चेत्, वयमनुमन्यामहे। अन्यथा चेत्, अत्यन्तविरोधान्नाद्रियामहे" इति सत्त्वासत्त्वविवेकवादे आचार्य सार्वभौमैः। नच–शुक्तिरजते सत्त्वासत्त्वे कालभेदनिर्वाह्ये कथं?। नहि तत्र रजतनास्तित्वप्रतीतिर्जायमाना कालभेदनिबन्धना भवितुमर्हति। तत्र कालत्रयेपि रजताभावात्। अन्यथा नेदं रजतमिति निषेधानुपपत्तेः इति वाच्यम्। देशभेदेन विरोधपरिहारस्य संभवात्। नहि 'कुत्रापि रजतं नास्ती'ति प्रतीतम्। येन तस्य सर्वात्मनाऽसत्त्वमाशंक्येत। परं तु आपणस्थरजतमस्त्येव। इदं रजतं नेति हि प्रतीतिः। नहि सर्वदेशकालाप्रसिद्धपदार्थस्य कुत्रचिन्निषेधस्संभवेत्। प्रतियोग्यप्रसिद्धेः। वस्तुतस्तु शुक्तिरजतस्थले सत्त्वासत्त्वे न प्रतीयेते। वस्तुन एवाभावात्। आपणस्थसत्यरजतं तत्र स्मर्यते। एतावदेव। भ्रमोपपत्तिस्तूपरिष्टात्प्रदर्शयिष्यामः। सत्यरजतस्य द्विरूपत्वमविरुद्धमिति च पूर्वमेवोक्तम्। सदसद्वैलक्षण्यं तु सर्वात्मना विरुद्धं न प्रतीयेत। सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन "परस्परविरोधे हि न प्रकारान्तर स्थितिः" इति न्यायात् सत्त्वतदभावरूपकोटिद्वयस्यैवोपपत्त्या तद्विलक्षणत्वरूपतृतीयकोटिपरिकल्पनं विरुद्धमेव। ननु–अत्र सत्त्वाऽसत्त्वयोः परस्परविरहरूपत्वं नाङ्गीक्रियते। सत्तादात्म्यानधिकरणत्वमसत्त्वम्। त्रिकाला बाध्यत्वं सत्त्वम्। एवं च सत्तादात्म्यवत्त्वे सति त्रिकालाबाध्यविलक्षणत्वमेव सदसद्विलक्षणत्वं पर्यवसन्नम्। अतो न विरोधः इति चेन्न—निरुक्तसत्त्वा-[illegible]र्दुस्स्थत्वात्। सत्तादात्म्यानधिकरणत्वमसत्त्वमित्यत्र सत्तादात्म्यं

क्रिरूपम्?। सद्भेदो वा, सत्सत्ताव्यतिरिक्तसत्ताशून्यत्वं वा?। नाद्यः—सद्भेदरूपसत्तादात्म्यस्य ब्रह्मण्येव प्रसिद्ध्या तदनधिकरणत्वरूपासत्त्वस्य प्रपञ्च एवापत्तेः। नचेष्टापत्तिः। प्रपञ्चे असद्वैलक्षण्यस्यैवोपपादनीयत्वात्। नान्त्यः—सत्सत्ताव्यतिरिक्तसत्ताशून्यत्वरूपसत्तादात्म्यस्य प्रपञ्चे बाधितत्वात् तदनधिकरणत्वरूपासत्वस्याप्रसिद्धेः। सत्सत्ताव्यतिरिक्ता हि व्यावहारिकी सत्ता प्रपञ्चेऽस्तीति भवन्मतम्। किञ्च—सत्सत्तातिरिक्तसत्ताशून्यत्वमित्यत्र सतः यादृशी सत्ता सैवास्यापि प्रपञ्चस्येत्यभिमतं, अथ तादृशव्यतिरिक्तसत्तासामान्यशून्यत्वमित्यभिमतम्?। नान्त्यः—दत्तोत्तरत्वात्। नाद्यः—प्रपञ्चस्यापि सत्यत्वापत्तेः। ततोऽसत्त्व दुर्निरूपमिति फलितम्। कालत्रयाबाध्यत्वरूपसत्त्वमपि निर्धर्मके ब्रह्मण्यसंभवात्, प्रकृत्यादावपि यथाश्रुति सभवात् तद्वैलक्षण्य प्रकृतिजीवयोर्बाधितमिति च पूर्वमेवोपपादितम्। तथाच अस्तीत्यादिप्रतीतिविषयत्वादिरूपप्रसिद्धसत्त्वादिस्वरूपपरित्यागेन अप्रसिद्धतत्परिष्कारेणापि, "भक्षितेपि लशुने न शान्तो व्याधिः" इति न्यायात् सदसद्वैलक्षण्यं न जीवति॥

यत्त्वत्र, (७५-पु) "अस्तु वा परस्परविरहरूपत्वम्। तथापि गोत्वतदभावयोरेकत्र दृष्टोपि विरोधः संयोगतदभावयोरेकदेशकालावच्छेदेनैकस्मिन् धर्मिणि न विरोधः। एवं सत्त्वासत्त्वयोः परस्परविरहरूपयोरप्यविरोधः स्वीक्रियते" इत्यादिकम्। तदसम्बद्धम्। "एकत्र दृष्टोपि विरोधः" इतीदं प्रथमान्तमनन्वितम्। "दृष्टेपि विरोधे" इति सप्तम्यन्ततया भाव्यम्। अपिच–यदि परस्परविरहरूपयोरपि सत्त्वासत्त्वयोरविरोधः स्वीक्रियते, तदा सदसद्रूपत्वमेवाङ्गीक्रियताम्। न तु तद्विलक्षणत्वम्। तथा च सदसद्वैलक्षण्यमनिर्वचनीयत्वं दत्तजलाञ्जलि स्यात्। वस्तुतस्तु मिथो विरहरूपयोस्तयोर्मिथो

विरोधो दुष्परिहर एव। नहि घटत्वाघटत्वयोरेकत्र समावेशो दृष्टचरः। तथापि चेदविरोधोऽङ्गीक्रियते, किमपराद्धं सप्तभङ्गीवादादिना। अव्याप्यवृत्तिधर्मयस्संयोगतदभावयोरिवैतयोरविरोधस्वीकारोक्तिरतीवोपहास्या। नात्र स्वमतस्ववाग्विरोधादिकमपि जानाति भवान्। एकत्रावच्छेदभेदपरिहार्यविरोधसंयोगतदभावयोरिव सत्त्वासत्त्वयोरपि कालादिभेदपरिहार्यविरोधयोरेकत्र घटादौ समावेशाङ्गीकारे चास्मन्मतप्रवेश एव। तदुभयवैलक्षण्यमनिर्वचनीयत्वमित्येतत्परित्यक्तमेव।"मद्विलक्षणत्वमात्रमनिर्वचनीयत्व"मित्युपन्यस्तकेचित्कारपक्षोपि पूर्वोक्तदोषादेवोपेक्ष्यः॥

यदपि चात्र (७५-पु)—सगुणत्वनिर्गुणत्वविवादे, प्रपञ्चसत्त्वानिर्वचनीयत्वादिविवादे च सगुणनिर्गुणवैलक्षण्य ब्रह्मण', सत्त्वानिर्वचनीयत्ववैलक्षण्य च प्रपञ्चस्य सिद्ध्येदित्याक्षेपे—समाधानमुच्यते—"विरुद्धाकारद्वयस्य सशयरूपत्वे तदुभयवैलक्षण्यनिर्णयो न स्यात्। अन्यतराकारनिर्णये च निर्गुणत्वानिर्वचनीयत्वादिनिर्णयसंभवात्। न हि वयं रूप्यादौ सदसदात्मकत्वमुपेत्य तत्र तदुभयवैलक्षण्य निरूपयामः। येन तद्विरुद्धोभयप्रतीत्या तद्वैलक्षण्यप्रसञ्जनमाञ्जसं स्यात्। किंतु प्रतीतरूपमेव सदसद्विलक्षणमिति। ख्यातिबाधान्यथानुपपत्त्या च सदसद्वैलक्षण्य तस्याक्षिप्यते, सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेतेति। नचैवं निर्गुणं चेत् ब्रह्म न प्रतीयेतेत्यादि शक्यते वक्तुम्। येन तदन्यथानुपपत्त्या तदुभयवैलक्षण्यमाक्षिप्येत। तस्मादुपपन्नमेवानिर्वचनीयत्व"मित्यादि।—तत्र ब्रूमः-असत्त्वमेवेति सौगताः। सत्त्वमेवेति साङ्ख्याः। भवद्भिस्तु सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत। अतः प्रतीतिबाधाभ्या सदसद्विलक्षणमिति। अत्रैवमापाद्यते। ब्रह्म निर्गुणमित्येके। सगुणमित्यपरे। ब्रह्म निर्गुणं चेत् सगुणश्रुतिप्रतिपाद्यं न स्यात्। सगुणं चेत् निर्गुणश्रुतिप्रतिपाद्यं न स्यात्। अतस्सगुण-

निर्गुणोभयविलक्षणमित्याश्रीयताम्। एवमेव संवित्सत्यत्वमिथ्यात्वादावपीति। एवमापादने किमुत्तरमत्र भवतोच्यते। संशयरूपत्वोक्तिः किमर्था। अन्यतरनिर्णये वा निर्गुणत्वादिनिर्णय इति कथम्?। वैपरीत्यं किं न स्यात्। सदसदात्मकत्वमेकत्र भवद्भिरङ्गीकृत्य तत्र तदुभयवैलक्षण्यं स्वीक्रियत इति कोनु वदति। सदसद्विलक्षणमिति प्रतीतरूपमित्यप्यसम्बद्धम्। नहि लोके घटादिकं सदसद्विलक्षण कश्चित्प्रत्येति। किञ्च-तदुभयविलक्षणत्व प्रतीतं चेत् ख्यातिबाधाभ्यां तस्याक्षेपः किमर्थः। अप्रतीतस्य ह्यन्येनाक्षेपः आवश्यकः। अपिच-मन्त्रेण बाध्येतेत्यादिकमपि न सङ्गच्छते भवन्मते। अत्र सत्त्वमबाध्यत्वव्याप्तम्। असत्त्वमप्रतीतत्वव्याप्तम्। प्रकृते च प्रपञ्चे व्यापकाबाध्यत्वाप्रतीतत्वनिवृत्त्या व्याप्यसत्त्वासत्त्वनिवृत्त्या तदुभयवैलक्षण्यसिद्धिरिति हि भवन्मनोरथः। अत्रोच्यते-प्रतीतत्वसत्त्वयोरेव, बाधितत्वासत्त्वयोरेव च कुतो व्याप्तिर्न स्यादिति। उक्तं हि संवित्सिद्धौ-"नासत्प्रतीतेर्बाधाच्चे"त्यादिना। किञ्च-यत्र सत्त्वं तत्र बाधितत्वाभावः इति व्याप्तिः कुत्र गृह्यते?। ब्रह्मणीति चेत्-निर्गुणे तत्र कुतो वा सत्त्वादिप्रसक्तिः। कल्पितसत्त्वादिप्रसक्तिरपि प्रपञ्चसाधारण्यादिना दूरोत्सारिता। तुच्छाप्रसिद्ध्यादिना चासत्त्वाप्रतीतत्वव्याप्तिग्रहोऽपि न संभवत्येव। अतोऽनिर्वचनीयत्वं सर्वात्मनाऽनिर्वचनीयमेवेति सिद्धम्॥

"यथार्थं सर्वविज्ञानमिति वेदविदां मतम्" इति यथार्थख्यातिपक्षे शुक्तिरजतस्थले ख्यातिबाधोपपत्तिरित्थम्। इदं रजतमित्यत्र भ्रमात्मके ज्ञाने शुक्त्यंशगतसत्यरजताल्पांशस्य शुक्त्यंशप्राचुर्यग्रहणाभिभूतत्वाभावात् अदृष्टवशाच्च विषयत्वेऽपि, दूरत्वादिदोषवशात् शुक्तिभूयस्त्वाग्रहणेन रजतार्थिनस्तत्र प्रवृत्तिर्जायते। तादृशदोषापगमे च शुक्तिभूयस्त्वे गृहीते प्रवृत्तेः प्रतिबन्धो वा वैफल्यं वा भवति। अयमेवात्र बाधः। अतः शुक्तिभूयस्त्वग्रहेण प्रवृत्तेर्बाधितत्वेन बाधित-

प्रवृत्तिहेतोः इदं रजतमित्याकारकज्ञानस्य भ्रमरूपस्य बाध्यत्वम्, शुक्तिभूयस्त्वग्रहस्य तु बाधकत्वमिति। नात्र इदं रजतमित्यस्य ज्ञानस्य वा तद्विषयभूतरजतांशस्य वा बाधः। विरोधात्। अपि तु उक्तरीत्या प्रवृत्तेरेव बाधः। मरीचिकाजलज्ञानादावपीयमेव रीतिः। इदं सर्वं यथाप्रतीति व्यवस्थाप्यम्। परमत्र शुक्तौ रजतांशो वा मरीचिकाया जलांशो वा कथ वर्तते इत्येतद्विचार्यम्। श्रीभाष्यादौ च सर्वमिदं विचार्य निर्धारितम्। श्रीविष्णुपुराणाद्युपबृंहितत्रिवृत्करण-श्रुत्युपलक्षितपञ्चीकरणप्रक्रियया सर्वविज्ञानयाथार्थ्यमुपपादितम्। पञ्चीकरणस्यैव विजातीयभूतारब्धे सदृशे विजातीयभूतारब्धसदृशान्तर-भ्रमनिर्वाहोपयोगित्वात्। "त्र्यात्मकत्वात्तु भूयस्त्वात्" इत्यादाविदं सूत्रकाराभिमतमिति च स्पष्टम्। सदृशवस्तुनि सदृशवस्त्वन्तरावयवसद्भावश्च पूर्वमीमांसकानामप्यभिमतः। सोमालाभे पूतीकग्रहणं विधीयते, "यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इति। परमयं विधिर्नियमार्थ एव। "सोमेन यजेत" इति विधिनैव सोमस्येव तदवयवानामङ्गत्वावगमात्। तादृशावयवकसोमव्यक्त्या यागानुष्ठानं मुख्यम्। विहितसोमालाभे च सोमावयवसुसदृशावयवकद्रव्यान्तराणां प्रतिनिधित्वेन प्राप्तौ तादृशसोमावयवसदृशावयवकपूतीकग्रहणं नियम्यते अनेन "यदि सोमं न विन्देत" इत्यादिवाक्येन। तथा चात्र पूतीकग्रहणनियमन, "सोमेन यजेते"ति वाक्यविहितसोमावयवसदृ-शावयवकत्वादेव पूतीकानाम्। व्रीहिनीवारस्थलेप्येवमेव। एतत्सर्वं नयद्युमणिभूमिकायामस्मद्गुरुचरणैर्विस्तृतम्। एवं श्रुतिस्मृतिमीमांसान्या-यानुभवप्रमाणैः शुक्तौ रजतावयवसद्भावस्याविरुद्धतया सर्वज्ञानयाथार्थ्येपि पूर्वोक्तरीत्या ससंवादिप्रवृत्तिजनकत्वतदभावाभ्यामेव ज्ञानप्रमात्वभ्रम-त्वोपपत्तिरिति न काचिदनुपपत्तिः। तदेवं प्रामाणिके सिद्धान्ते स्थिते. "शुक्तिरजतस्थले शुक्तौ रजतस्य सत्त्वात् यथार्थैव सा ख्यातिः।

शुक्तिभूयस्त्वग्रहो बाधः। बाध्या तु पुरुषप्रवृत्तिरेव, न ज्ञानविषयौ। अतो न ख्यातिबाधान्यथानुपपत्तिः, येनानिर्वचनीयकल्पनावकाशः” इत्याद्यनूद्य, तन्निखण्डयिषया, यदत्र (७६-पु) “तदतितुच्छम्। सत्ख्यातिमते पुरोवर्तिनि रजतस्य सत्यत्वेन ख्यात्युपपत्तावपि बाधानुपपत्तेः। शुक्तिभूयस्त्वसाकल्यग्रहस्य तद्बाधकत्वे च शुक्तिमध्यगतात्यल्परजतज्ञानस्यापि तद्बाध्यत्वप्रसङ्गस्स्यात्। न चेष्टापत्तिः। त्वन्मते पुरुषप्रवृत्तेरेव बाध्यत्वोपगमात्। नच यद्ज्ञानात् यत्प्रतीतिः तज्ज्ञानं तत्प्रतीतिबाधकम्। शुक्तिभूयस्त्वाज्ञानात् रजतप्रतीतिरिति तद्बाधकत्वं तज्ज्ञानस्य युक्तमिति वाच्यम्। सत्ख्यातिमते आपणस्थरजतस्येव शुक्तिगतरजतस्यापि इन्द्रियसंनिकर्षादिना ज्ञाने सति शुक्तिभूयस्त्वसाकल्याग्रहहेतुकत्वकल्पनानवकाशात्। अबाध्यस्य रजतज्ञानस्य बाध्यत्वापाताच्च। नच शुक्तिभूयस्त्वसाकल्यग्रहप्रतिबन्धकीभूतदोषजन्यरजतज्ञानस्य तादृशग्रहबाध्यत्वमिति वाच्यम्। भ्रमस्य दोषजन्यत्वानुपगमात् भवद्भिः। ‘यथार्थं सर्वविज्ञानमिति वेदविदां मतम्’ इत्युक्तेः।” इत्यादिकमुक्तम्। तत् सर्वं श्रीभाष्यश्रुतप्रकाशिकाग्रन्थाद्यनभिज्ञतामूलमन्यथाग्रहणमूलं मीमांसाशास्त्रवासनाविधुरं अतिविचित्रं केवलप्रद्वेषैकमूलमर्थतोप्यनन्वितमिति, ‘तदतितुच्छ’ मिति त्वत्प्रतिज्ञातमत्रैव त्वदुक्ते स्वरसमन्वेतीति च प्रतिपादयामः। तथाहि—शुक्तिभूयस्त्वग्रहेण रजतज्ञानस्य बाध्यत्वमङ्गीक्रियत एव। बाधो नामात्र ज्ञानस्य वा तद्विषयस्य वा न स्वरूपतः, तयोः सत्यत्वात्। अपि तु बाधितप्रवृत्तिकत्वमेव। प्रवृत्तेस्तु बाधः उत्पत्तिप्रतिबन्धो वा वैफल्यं वा। अमुं सिद्धान्तमपरिज्ञाय रजतज्ञानस्य बाध्यत्वप्रसञ्जनमतीवोपहास्यमिति किमु वक्तव्यम्। यदि शुक्तिरजतस्थलेपि विषयसत्यत्वं, तर्हि तज्ज्ञानस्याऽऽपणस्थरजतज्ञानस्येव कुतो वा

सफलप्रवृत्तिजनकत्व नास्तीति चेत्—उच्यते। शुक्तौ पूर्वोक्तश्रुत्यादि-प्रमाणबलात् रजतावयवसद्भावे निश्चिते, अतिस्वल्पस्य तद्रजतांशस्य आपणस्थरजतस्येव कार्यकरत्वं नास्तीति च प्रत्यक्षतो निर्धारणात् तत्र प्रवृत्तिर्विघट्यते। न तावता तत्रत्यमतिस्वल्प रजतमरजतं भवितुमर्हति। अतश्शुक्तिरजतस्थले रजतपारमार्थ्येऽपि तत्प्रवृत्तेरुक्तरीत्या बाधितत्वेन तज्ज्ञानस्य बाधितत्वोपचार इति तत्त्वम्॥

किञ्चात्र शुक्तिभूयस्त्वसाकल्यग्रह: इति असकृद्भवता प्रयुक्त, "शुक्तिभूयस्त्ववैकल्यसाकल्ये"त्यादिकारिकार्थापरिज्ञानं भवतोऽवगम यति। शुक्तिभूयस्त्वग्रहसाहित्यमेव तत्र विवक्षितम्। न तु तत्साकल्यग्रह इति। अपिच—शुक्तिभूयस्त्वाग्रहात् रजतज्ञानमिति न वयं ब्रूमः, येन तद्ग्रहेऽपि इन्द्रियसंनिकर्षवशात् रजतज्ञानमापाद्येत। किन्तु दोषात् शुक्तिभूयस्त्वाग्रहः, तेन तद्भूयस्त्वग्रहानभिभूतत्वात् रजतांशग्रहः। दोषापगमे च शुक्तिभूयस्त्वग्रहेण रजतांशज्ञानं बाध्यते प्रवृत्तिद्वारा पूर्वोक्तरीत्या। तद्भूयस्त्वग्रहे सत्येव सत्यपीन्द्रियसनिकर्षे रजतांशग्रहो नापादयितुं शक्यते, तद्भूयस्त्वग्रहाभिभूतत्वात्। नहीन्द्रियसनिकर्षमात्र तद्ग्रहहेतुः। अन्यथा शुक्तौ तत्संनिकर्षे सत्ये वाविशेषात् शुक्तितत्वस्यापि ग्रहापत्तेर्दुर्वारत्वात्। अतोऽभिभूतत्वात् रजतांशो न गृह्यत इत्येव तत्त्वम्। अत एव हि सुवर्णे तैजसांशे सत्यपि पार्थिवाभिभवात स्पृष्टेऽपि नोष्णस्पर्शावगतिरित्युच्यते। किञ्च—"भ्रमस्य दोषजन्यत्वानुपगमात् भवद्भिः, 'यथार्थ'मित्युक्तेः" इति प्रतिपादनं व्याघातैकपराणां भवतामेव शोभते। "भ्रमोऽभ्युपगम्यते। तस्य दोषजन्यत्वं परं नाङ्गीक्रियते। कुत इति चेत् सर्वं विज्ञानं यथार्थमित्युक्तेः" इत्यहो भवतां व्युत्पत्तिवैचित्र्यम्। भ्रमो ऽभ्युपगम्यते तथैव दोषोऽप्यभ्युपगम्यते। तस्य तत्प्रयोज्यत्वमपि।

नहि तावता सर्वविज्ञानयाथार्थ्यं बाधितम्। शुक्तिमरीचिकादौ रजतजलादिसद्भावेन यथार्थख्यातावपि तादृशरजतजलादेरकार्यकरत्वेन प्रवृत्तिबाधात् तज्ज्ञानस्य भ्रमत्वबाधितत्वदोषमूलत्वोपपत्तिः। नच— इदं रजतमिति ज्ञानं प्रति नेदं रजतमित्यस्य ज्ञानस्य बाधकत्वं नोपपद्यते। त्वन्मते हि शुक्तितत्त्वसाक्षात्कारः 'इयं शुक्ति'रित्यभ्युपगम्यते इति वाच्यम्। रजतभेदग्रहस्य बाधकत्वाभ्युपगमात्। रजतभेदो नामात्र शुक्तित्वमेव। तद्ग्रहः उभयथापि भवितुमर्हति, इयं शुक्तिरिति, नेद रजतमिति च। प्रतियोगिसापेक्षत्वनैरपेक्ष्यादिकं तु शब्दस्वभावाधीनमिति श्रीभाष्यश्रुतप्रकाशिकादिपरिचयवतां सुज्ञेयम्। एतेन इदमपि निरस्तम्, "सत्यज्ञानस्य बाधकत्वमपि न युक्तम्। त्वन्मते रूप्यज्ञानस्यापि सत्यत्वेन बाधकत्वापातात्" इति। "बाध्यबाधकभावोपि भूयस्त्वेनोपपद्यते। शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः॥" इत्येतत्कारिकार्थापरिज्ञानात्। भूयस्त्वज्ञानत्वेन हि बाधकत्वम्। भ्रान्तिज्ञानस्य तु न भूयस्त्वज्ञानत्वम्। केवलरजतमात्रविषयकत्वात्। अतो नानुपपत्तिः। नच रजतज्ञानस्य त्वन्मते सत्यविषयकत्वेन दोषमूलत्वमनुपपन्नमिति वाच्यम्। दोषाभावे रजतज्ञानस्यैवानुदयात्तन्मूलत्वोपपत्तेः। दोषाभावे हि शुक्तिभूयस्त्वग्रहेण रजतांशाभिभवात् इन्द्रियसंनिकर्षे सत्यपि तज्ज्ञानं नोदेति। अतोऽत्र शुक्तौ सत्यरजतज्ञानेपि दोषहेतुकत्वं उक्तरीत्योपपन्नमिति न वैफल्यशङ्का। न तावता सत्यघटादिज्ञानस्यापि दोषमूलत्वापत्तिस्सावकाशा। तत्र ग्रहान्तरानभिभवात् इन्द्रियसंनिकर्षमात्रेण तज्ज्ञानोदयोपपत्तेः। न तत्र दोषप्रसक्तिः। प्रसञ्जकस्यैव तत्प्रसक्तिः॥

यदप्यत्र (७६-पु) "ननु दोषस्य स्वप्रमितिसजातीयज्ञानजनकत्वनियम इति चेत्—त्वन्मते रजतस्याधिष्ठानज्ञानातिरिक्त-

विषयत्वाभावेनाधिष्ठानज्ञानमेव रजताकारतया भासते। अतोऽधिष्ठान ज्ञानस्य तवापि दोषहेतुकत्वमसंप्रतिपन्नमिति दोषस्य भ्रमहेतुत्वं त्वया न निर्वोढु शक्यते। नहि त्वन्मते इदमिति ज्ञानादन्यो विभ्रमः संभवति। तस्यैव रूप्यसम्बन्धे रूप्यज्ञानत्वोपपत्तेः। अतो रूप्यज्ञानस्य भ्रमत्वं दुस्संपादम्। दोषमूलकत्वस्य भ्रमत्वाप्रयोजकत्वात्। अन्यथा घटादिज्ञानस्यापि दोषमूलकत्वापत्तेः" इत्यादि—तत्सर्वं जरद्गवादि-वाक्यतुल्यम्। स्पष्टमिदं श्रोतॄणाम्। दोषस्य स्वप्रमितिसजातीय ज्ञानजनकत्वं नियम इति कोनु वदति। दोषस्य सत्तयैव हि भ्रमजनकत्वं प्रसिद्धम्। अपिच—रजतस्याधिष्ठानज्ञानातिरिक्तविषय त्वाभावेनेत्येतत्कथमर्थवत्?। इदं रजतमिति ज्ञान जायते। तच्च रजतविशेष्यकरजतत्वप्रकारकमेव। पूर्वोक्तरीत्या तस्य दोषाधीनशुक्ति भूयस्त्वग्रहाभावेन तद्ग्रहानभिभूतरजतविषयकत्वमुपपन्नमेव। विषयस्य च तस्याकार्यकरत्वेन प्रवृत्तेर्बाधात् बाधितप्रवृत्तिजनकत्वेन तस्य भ्रमत्वं दोषमूलत्वं च नानुपपन्नम्। अत एव घटादिज्ञानस्य दोषमूलकत्वापत्तिश्च न संभवतीति च पूर्वमेवोक्तम्॥

यदत्र (७७-पु) "किञ्च दोषप्रतिबध्यसाजात्यमनियतं वर्तते। गुणत्वादिना साजात्यं तु सर्वत्र वर्तते। प्रमात्वेन साजात्यं च भ्रमेपि न संभवति।" इत्युक्तम्। ईदृशानर्थकबाधितार्थवाक्यरचनेन पत्रपूरणं विना नान्यत् शरणं भवताम्। दोषप्रतिबध्यसाजात्यनियम कुतो वा कुत्र वा को वा वदति?। अबद्ध कृत्वा किमिदं कुचोद्य-करणम्। ज्ञानयोः प्रतिबध्यप्रतिबन्धकभावो विषयविशेषाधीन इति तु स्थितम्। मणिमन्त्रादिन्यायेनाऽन्यादृशोपि सुप्रसिद्ध एवेत्यन्यदेतत्॥

यदपि (७७-पु) कीदृशमिदं दोषत्वम्। (१) तदभाववज्ज्ञानत्वं, (२) अथ तदभाववद्विशेष्यकज्ञानत्व (३) उत भ्रमविशेष्यविशेष्यक-

ज्ञानत्वं, (४) आहोस्वित् भ्रमहेतुत्वम्। नाद्यः, वस्तुतो यत् तदभाववत् तज्ज्ञानस्य प्रमासाधारण्येन भ्रमासाधारणत्वाभावात्। न द्वितीयः—तदभाववद्विशेष्यकानामपि ज्ञानाना प्रमासाधारणतया बहुलमुपलंभात्। न तृतीयः—तदपेक्षया भ्रम एव भ्रमे दोष इति कल्पनाया लघीयस्त्वात्। नापि तुरीयः—तत्र किं दोषत्वात् भ्रमहेतुत्वं, उत भ्रमत्वात् दोषजन्यत्वं। नाद्यः—भ्रमहेतुत्वातिरिक्त-दोषत्वानिरूपणेन साध्यसमत्वात्। नान्त्यः—विकल्पासहत्वात्। तत्र भ्रमत्वं दोषजन्यज्ञानत्वं, उत विसंवादिप्रवृत्तिजनकत्वम्। न प्रथमः-साध्यसमत्वात्। न द्वितीयः-उपेक्षणीयभ्रमादावसिद्धेः। किञ्च—ज्ञानस्य प्रवृत्तिजनकत्वमात्रमेव। संवादविसंवादौ तु विषयभावाभावनिबन्धनावेव। एवं च सद्विषयकज्ञानादेव प्रवर्तमानस्य पुंसः यादृच्छिकप्रवृत्तिविसंवादे तज्ज्ञानस्य दोषहेतुकत्वाभावात् व्यभिचारः। बाधितविषयज्ञानत्वात् दोषजन्यत्वमनुमेयमिति चेत् बाधकज्ञानाभावे यादृच्छिकसंवादिभ्रमस्य दोषजन्यत्वेपि विषयबाधाभावात्। बाधकज्ञानसत्त्वे च दोषजन्यत्वं विनापि बाधितविषयकत्वसिद्धेः। ततस्त्वन्मते दोषस्य न भ्रमहेतुत्व घटते" इत्युदितम्। तत्रासामञ्जस्यमुद्घाटयामः। तत्र प्रथमं विकल्पितेषु चतुर्षु पक्षेषु पक्षत्रयोल्लेख-तद्दूषणप्रवृत्तिः अकाण्डताण्डवतुल्या। स्वानभिज्ञताप्रकाशनैकार्था च। नहि विषयेन्द्रियादिगतकाचकामालतिमिरादिदोषाणां ज्ञानरूपत्वम्। येन तदभाववज्ज्ञानत्वमित्याद्युल्लेखादिकं सामञ्जस्यं लभेत। तत्र बहुधा विद्यमानमप्यसामञ्जस्यं प्रकृतानुपयोगित्वात् विस्तरभयाच्चोपेक्ष्य प्रकृतमनुस्रियते। भ्रमहेतुत्वं दोषत्वमिति चतुर्थपक्षे सिद्धान्त्यभिमते योयं विकल्पः, दोषत्वात् भ्रमहेतुत्वं, भ्रमत्वात् दोषजन्यत्वमिति, स न घटते। किं नाम दोषत्वमिति प्रश्नः। भ्रमहेतुत्वरूप दोषत्वमिति समाधानम्। एवं चास्य विकल्पस्यैवात्रासाञ्जस्यमेव।

नचात्र भ्रमहेतुत्वं दोषपदवाच्यत्वादित्याद्यभिप्रायकोऽयं विकल्प इति वाच्यम्। उपरि एतद्विकल्पदूषणावसरे 'साध्यसमत्वात्' इति दूषणानुपपत्तेः। किञ्च—भ्रमत्वं दोषजन्यज्ञानत्वमित्यत्रापि न साध्यसमत्वप्रसक्तिः। भ्रमत्व भ्रमपदवाच्यत्वमित्यभ्युपगमे विरोधाभावात्। वस्तुतस्तु विसंवादिप्रवृत्तिजनकत्वमेव भ्रमत्वप्रयोजकम्। तादृशभ्रमहेतुत्वमेव च दोषत्वमिति न किञ्चिदवहीनम्। उपेक्षणीय भ्रमेषु विसंवादिप्रवृत्तिजनकत्वाभावेपि तादृशप्रवृत्तिजननयोग्यत्वमक्ष तमेवेति च न क्षतिः। प्रवृत्तेर्विसंवादित्वादिकं तु न विषयभावा भावाधीनम्। शुक्तिरजतस्थलादौ विषयसद्भावस्य सप्रमाणं पूर्व मुपपादितत्वात्। किन्तु दोषमूलकभेदाग्रहभूयस्त्वसाकल्यवैकल्याद्य धीनमेव। तथाच संवादविसंवादयोर्दोषतदभावनिबन्धनत्वमुपपन्नमेव। नच सद्विषयकज्ञानात्प्रवृत्तिस्थले यदृच्छया विसंवादे दोषहेतुकत्वा भावात् व्यभिचार इति वाच्यम्। विसंवादबाध्यव्यवहारजननयोग्यत्वस्य तत्रासत्त्वात्। विसंवादस्तु विषयापक्रमाधीन एव। पक्षिबुद्बुदादौ हि तादृशी प्रवृत्तिः प्रसिद्धा। अन्यथा आपणस्थरजतविषयप्रवृत्तेरपि कदाचिद्विसंवादे जाते त्वन्मते विषयस्याभावप्रसङ्गात्। तथाच विसंवादप्रवृत्तिजननयोग्यत्वं यत्र, तत्र दोषमूलकत्वमित्येव नियमः। योग्यता च हानोपादानादिव्यवहारासमर्थविषयकत्वमेव। पक्षि बुद्बुदादिविषयकप्रवृत्तिहेतुज्ञाने व्यवहारसमर्थविषयकत्वस्य विद्यमानत्वेन तदसमर्थविषयकत्वरूपविसंवादिप्रवृत्तिजननयोग्यताया असत्त्वात् न व्यभिचारः। एवमेव संवादिप्रवृत्तिजननयोग्यत्व यत्र, तत्र ज्ञाने दोषहेतुकत्वाभाव इति नियमः। अत्र योग्यत्वं व्यवहारसमर्थविषयकत्वमेव। अत एव यादृच्छिकसंवादिप्रवृत्तिजनकप्रभामणिभ्रमस्थले दोषहेतुकत्वेन तदभावरूपसाध्याभावेपि, यदृच्छया संवादिजनकत्वेपि तादृशप्रवृत्तिजननयोग्यत्वरूपहेतोरप्यभावात् न क्षतिः।

इदं सर्वं, "बाध्यव्यवहारहेतुर्ज्ञानमप्रमाणं भ्रान्तिरित्युच्यते। तत्र मणिप्रभादिदर्शने मण्याद्यर्थप्रवृत्तौ तत्संवादोऽन्यायत्तः। अबाध्यव्यवहारहेतुर्ज्ञानं प्रमाणमभ्रान्तिरिति व्यवह्रियते। तत्र कदाचित् पक्षिबुद्धदादौ प्रवृत्तिविसंवादो विषयापक्रमादेरिति भावः" इति सर्वार्थसिद्धावाचार्यसार्वभौमैस्सूचितमेव। तस्मात् "त्वन्मते दोषस्य न भ्रमहेतुत्वं घटते" इति त्वदुक्तं तवैव दोषमूलकभ्रमाश्रयत्वं स्थापयति॥

नच सत्ख्यातिमते प्रवृत्तिविसंवादः तत्प्रतिबन्धो वा बाधोपि बाधित एव। विषयसद्भावात्। व्युदसनीयेषु भ्रमेषु प्रवृत्तेरसंभवेन बाध्यत्वाऽनापत्तेश्चेति वाच्यम्; दत्तोत्तरत्वात्। शुक्तौ हि कटकाद्यनुपयुक्ताल्पांशरजतसद्भावेपि तदुपयुक्तरजतभूयस्त्व नास्त्येव। अतो विसंवादादिस्सूपपन्न एव। केषुचिद्भ्रमेषु प्रवृत्त्यसंभवेपि बाधितप्रवृत्तिजननयोग्यत्वमस्तीति पूर्वमेवोक्तमिति न काप्यनुपपत्तिः। शुक्तिगताल्पांशरजतस्याकार्यकरत्व तु उपलंभव्यवस्थाप्यम्। "आपणस्थरजतस्येव शुक्तिरजतस्याप्यर्थक्रियाकारित्वावश्यंभावात्" इति शपथमात्रेण न तस्यार्थक्रियाकारित्वं स्यात्। दृश्यते हि लोकेपि अल्पांशस्याकार्यकरत्वेपि तस्यैवांशान्तरैस्समुदितस्य कार्यकरत्वम्। एवं च अकार्यकरे कार्यसमर्थरजताद्यभेदाग्रहात् भ्रमाद्युपपत्तिस्सुकरैव॥

एतेन—"यद्युपलभ्यमानं रजतमकार्यकरमित्येवोपलभ्येत, तदा प्रवृत्त्यसंभवः। यदि च कार्यकरमिति, तदा न स भ्रमः। तथापि भ्रमश्चेत् अन्यथाख्यातिरनिवार्ये"ति निरस्तम्॥

यदपि (७८-पु) शुक्तिभूयस्त्वग्रहस्यैव रजतज्ञानबाधकत्वमिति नियामकं किम्। उभयोरपि सद्विषयकत्वात्। किञ्च शुक्तिरजतस्थले

किंविषयिणी प्रवृत्तिः ?। रजतविषयिणी चेत्, सा न विसंवदेत्, समतरजतविषयकप्रवृत्तिवत्। यदि च शुक्तिविषयिणी सा, तदा तत्र को हेतुरिति वक्तव्यः। यद्यगृहीतभेदस्य वस्तुद्वयस्य गुण प्रधानावगाहिविशिष्टज्ञानादित्युच्यते—तदा इदं रजतमिसि भेदग्रहः गुणप्रधानावभासश्च विद्यत इत्यन्यथाख्यातिप्रसङ्गः। तस्मात्सत्ख्याति वादे भ्रमाद्यसंभवः।" इत्यादि—तत्र पूर्वमेवोक्तमपि समाधानं पुनरनुवदामः। "कदाचिच्चक्षुरादेस्तु दोषात् शुक्त्यंशवर्जितः। रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते॥ दोषहानौ तु शुक्त्यशे गृहीते तन्निवर्तते। अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु॥ बाध्यबाधकभावोपि भूयस्त्वेनोपपद्यते। शुक्तिभूयस्त्ववैकल्यसाकल्य ग्रहरूपतः॥" इत्यादिश्रीभाष्य, तट्टीकायथावस्थितार्थं गुरुमुखात् श्रुतवतो नेयमाशङ्का उदियात्। शुक्तिभूयस्त्वेन तद्विषयकत्वं बाधकत्वनियामकम्। तत एव रजताल्पज्ञानस्य बाध्यत्वमिति व्यवस्था। प्रवृत्तिश्च रजत विषयैव। विसंवादस्तु आपणस्थरजतवत्कार्यकरत्वाभावात्। इद रजतमित्यत्र शुक्त्यंशाग्रहणात् अन्यथाख्यातिशङ्का दूरोत्सारिता। "शुक्त्यंशवर्जितः" इति ह्युक्तम्। एवं च सत्ख्यातिवादे भ्रमबाधक-बाध्यत्वप्रवृत्तयो नितरां संगच्छन्त इति सर्वप्रमाणानुगुणं स्वरससिद्धम्॥

यत्तु अत्रैव (७८-पु) "तथा च मृदं घटादिपरिणामोन्मुखी-कुर्वन् दण्डादिरिव मूलाविद्यां रजताकारपरिणामोन्मुखीकुर्वन् दोषो निमित्तमात्रमभ्युपेयमिति दोषसंवलिताविद्याविलसितभ्रमज्ञानविषय रजतादीनामनिर्वचनीयत्वमनिवार्यमेव" इत्युक्तम्। तन्नतमां घटते। दण्डादिस्थानीयस्य दोषत्वं केन गृहीतम् ?। अविद्यापरिणाम एव सर्वोपि प्रपञ्चः। को विशेषः शुक्तिरजतस्थले ?। किञ्च—अविद्यैव हि दोषस्त्वन्मते। सति चैवं कथं भ्रमप्रमाण्यवस्थितिस्त्वन्मते।

मिथ्यामते परिणामवादश्चोपहास्य एव। अतो भ्रमाद्यस्त्वन्मत एव दुरुपपादा इति सिद्धम्। अधिकं परमार्थभूषणादौ द्रष्टव्यम्॥

यदपि चात्रैव (७८—पु) त्रिवृत्करणश्रुतिबलात् सदृशे सदृशान्तरवस्तुसद्भावाच्च शुक्तिरजतज्ञानं यथार्थमित्येतद्दूषयितुं, "तदसमञ्जसम्। रजतावयवस्याऽवयवत्वं किं शुक्त्यवयवान्तरितं, उत तदनन्तरितं?। नाद्यः—शुक्त्यवयवे रजतबुद्ध्याऽन्यथाख्यातिप्रसङ्गात्। अवयविवृत्तिजातेरवयववृत्तौ मृदि घटत्वादिजातिसाकर्यप्रसङ्गस्स्यात्। नान्त्यः—विकल्पासहत्वात्। रजतपरिणामः शुक्तिमभिव्याप्य वर्तते, अथानभिव्याप्य?। नाद्यः— शुक्त्यनुपलंभापत्तेः। नान्त्यः— शुक्तेरियत्ताज्ञानासंभवात्। सर्वाभिमतस्य 'नेद रजत'मिति ज्ञानस्य बाधकत्वानुपपत्तेश्च। परमते शुक्तिभूयस्त्वसाकल्यज्ञानेन रजतोपलब्धिनिरोधे "प्रागिहाऽद्राक्षमह रजतम्। नेदानीं" इति बाधस्स्यात्। न तु 'नेदं रजत'मिति" इत्युक्तम्। तदेतदेवासमञ्जसतमम्। सिद्धान्तापरिज्ञानमूलत्वात्। अवयवातिरिक्तावयवी नास्तीति सिद्धान्तः। मृदि घटत्वादिजातिसांकर्यापादनमतीवोपहास्यम्। घटत्वं हि संहतावयववृत्ति। मृत्त्वं तु प्रत्यवयवमस्ति। घटेपि चास्ति। किमत्र साङ्कर्यम्। परिदृश्यमानशुक्तिखण्डे शुक्तिभागोऽधिकः। रजतभागश्चाल्पः। व्यवहारव्यवस्था च सूत्रकारैरेव प्रादर्शीति प्रागेवावाचि। तत्र तत्तदवयवेषु शुक्तित्वरजतत्वे वर्तेते। इमे च न संघातवृत्तिनी। एवं च भ्रमदशायां दोषवशात् शुक्त्यंशवर्जितो रजतांश एव गृहीतः। तत्र च रजतत्वमस्तीति नान्यथाख्यातिप्रसङ्गः। भ्रमनिवृत्तौ तु शुक्तिभूयस्त्वग्रहात् अभिभूतत्वात् न रजतांशो गृह्यते। शुक्तेरियत्ताज्ञानं च न दर्शनमात्रेण कदापि कस्यापि भवति। प्रमाणतस्तु रजतांशसद्भावेपि भवत्येव। भवति हि लोके रत्नखचितेपि हेम्नि प्रमाणतः

इयत्तापरिज्ञानम्। नेदं रजतमित्यस्य बाधकत्वं च सम्यगेव भवतीति पूर्वमेवोपपादितम्। नञर्थो हि तत्र शुक्तित्वमेव। तथाच 'इयं शुक्तिः' इत्यस्येव, 'नेदं रजत'मित्यस्यापि बाधकत्वे न काप्य नुपपत्तिः। "प्रागिहाऽद्राक्षमह रजतं, नेदानी"मिति बाधक प्रत्ययेन भाव्यमित्यापत्तिश्चासमञ्जसैव। यदि पूर्वं, "इह रजत" मिति प्रतीतिरुत्पन्ना स्यात्, तदा "नेदानीमि हरजत"मिति बाधक प्रत्ययो जायेतैव। पूर्वं, "इदं रजत"मिति प्रतीतिः, तर्हि नेद रजतमित्येव भवति बाधकप्रतीतिः। अनयोर्ज्ञानयोर्बाध्यबाधकभावश्च प्रवृत्तिबाधनिबन्धन इति तु पूर्वमुपपादितमेव॥

ननु—शुक्तौ रजतावयवसिद्धावेव त्रिवृत्करणश्रुत्युदाहरणमुपपन्नं स्यात्। अन्यावयवस्यान्यत्र सद्भावस्तु अनुपपन्नः। अन्यथा रज्जुगो-घटादिष्वपि सर्पगवयवल्मीकावयवसद्भावापत्तेः। न चेष्टापत्तिरसुवचा; दृष्टविरोधात्, प्रमाणाभावाच्च। किञ्च—त्रिवृत्करणप्रक्रियया शुक्ताविव रजतस्य घटेप्यावश्यकत्वेन तत्रापि रजतभ्रमः स्यात्।—इति चेन्न। दत्तोत्तरत्वात्। सदृशे सदृशवस्त्वन्तरसद्भावे हि प्रत्यक्षं प्रमाणम्। प्रतिनिधिन्यायोपि। इदं च पूर्वमेवोपपादितम्। त्रिवृत्करणश्रुतिस्तु विजातीयभूतारब्धे सदृशे विजातीयभूतारब्धसदृशान्तरभ्रमौपयिकी भवति। एकजातीयभूतारब्धसदृशवस्तुभ्रमविषये तु प्रतिनिधिन्याय एव प्रमाणम्। एतेन—रज्जुगोघटादिष्वपि सर्पगवयवल्मीकसादृश्य-सद्भावात् तत्तदवयवसदृशपार्थिवांशसद्भावे न कोपि दृष्टविरोध इति सिद्धम्। घटादौ तेजोभागसद्भावेपि रजतावयवसदृशतया परिणा-माभावादेव न तत्र रजतभ्रमः। तथापरिणामाभावश्चादृष्टायत्त इत्येवास्थेयम्। नहि गोभक्षिततृणादेः क्षीरतया परिणामे वृषभभक्षित-स्यापि तस्य तथा परिणाम इति नियमो दृश्यते॥

यदत्र (७९-पु) "त्रिवृत्करणश्रुतिरव्याकृतपञ्चभूतानां पञ्चीकरणेन सर्वं पाञ्चभौतिकमिति प्रतिपादयति। ननु व्याकृतस्य शुक्त्यादेर्भूत-पञ्चकवत्त्वम्। त्रिवृत्करणश्रुत्या शुक्तौ रजताभ्युपगमेपि नैकैकस्य भूतस्यावस्थापरिणामित्वं, किंतु समुदितस्यैव। नहि त्रिवृत्कृतस्य भूतस्य प्रत्येकपरिणामित्वम्। "यदग्ने रोहितं रूप"मित्याद्यपि विशिष्टस्यैवावस्थान्तरपरिणामित्वं ब्रूते, ननु प्रत्येकस्य। . समनुगत-भूतावस्थाभेदे विजातीयपरिणामद्वयमप्रामाणिकमेव। अतः त्रिवृत्करण-श्रुतिः शुक्तौ रजतसद्भावे न प्रमाणम्" इत्यादि—तदसङ्गतम्। अव्याकृताना भूताना पञ्चीकरणेपि अण्डान्तर्वर्तिपदार्थानामपाञ्चभौतिकत्वं कुतोऽवगम्यते?, येन, "ननु व्याकृतस्य शुक्त्यादेर्भूतपञ्चकवत्त्वं" इत्याद्याशङ्क्येत। व्याकरणात पूर्वं पञ्चीकृतानि भूतानि पुनर्व्याकरणात् पश्चात्पृथग्भवन्तीति त्वदाशयः शोभते। विचित्रा भवदीया व्युत्पत्तिः। व्याकृतस्यैव ह्यग्नेस्त्रिरूपता प्रदर्श्यते श्रुतावपि "यदग्ने रोहित रूप" मित्यादौ। किञ्च—एकस्मिन् व्याकृतभूतेपि तदितरभूतांशा अल्पशः सन्त्येव परिणताः। अत्रापि व्याकृताग्नौ, "यत्कृष्णं तदन्नस्ये"ति पृथिव्यंशसद्भावप्रदर्शनमेव प्रमाणम्। एवंरीत्या शुक्तावपि तेजोंशपरि-णामरजतसद्भावे विरोधगन्धोपि नास्ति। एतेन "समनुगतभूता-वस्थाभेदे विजातीयपरिणामद्वयमप्रामाणिकम्"इति निरस्तम्। अवैदिकत्वात्। वेदो हि अण्डान्तर्वर्तिव्याकृताग्नौ त्रिरूपत्त्वं प्रदर्शयति। गवयवल्मीकादौ गोघटादिसादृश्यज्ञानस्य त्रिवृत्करणानुपयोगेपि सदृशे सदृशान्तरवस्त्व-वयवसद्भावस्य प्रामाणिकत्वात्सुतरामुपपत्तिः। तथाच त्रिवृत्करणश्रुतिः शुक्तौ रजतांशसद्भावे सुतरां प्रमाणं भवतीति सिद्धम्॥

यदत्र (७९-पु) उदाहृतं, "उपपादयितुं तैस्तैर्मतैरशंकनीययोः। अनिर्वक्तव्यतावादपादसेवागतिस्तयोः" इति, तदिद—

शुक्तिरूप्यख्यातिबाधोपपत्तिस्सुष्ठु दर्शिता।
अन्यथैवेत्यतो नैवानिर्वाच्यत्वमतोऽस्थितिः ॥

इति प्रत्याख्यातमवधेयम् ॥

यदप्यत्र (७९-८०-पु)—सोमाभावे पूतीकग्रहणनियमनं पूतीकेषु सोमावयवसद्भावनिबन्धनमिति तन्न्यायेन शुक्तौ रजतावयवसद्भाव प्रसाधन प्रदुदूषयिषुणा, "तदिदं तान्त्रिकस्यापि अवैदिकत्वदोषपरिजिहीर्षावचन न श्रद्धेयम्" इत्यारभ्य, "सोमाभावे पूतीकग्रहणं न तत्सोमावयवसत्त्वनिबन्धनम्। किंतु विधानादेव। अन्यथा 'सोमेन यजेत' इति विधिनैव गतार्थत्वेन, 'यदि सोमं न विन्देत' इत्यादि विधिवैयर्थ्यापत्तेः। 'सोमाभावे' इत्यंशस्याप्यसाङ्गत्यापत्तेः। पञ्चीकरण प्रक्रियया सर्वत्र सर्वावयवसत्त्वेन श्यामाकादीनामपि प्रतिनिधित्वेनोपादातुं शक्यत्वेन नीवारादीनामेव प्रतिनिधित्वेनोपादानमिति मीमांसकनियमभङ्गापत्तेश्च। न खलु सादृश्यादेव प्रतिनिधिरिति न्यायविद्दर्शनम्। किंतु शास्त्रादेवेति। नहि रागप्राप्तान् पूतीकान् अन्यान् वा द्रव्यविशेषान् प्रतिनिधीकृत्य यागादिकमनुतिष्ठन् शास्त्रोक्तकारी स्यात्" इत्युक्त्वा, तदनन्तरं—"सोमेन यजेतेति वाक्यं ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्याकाङ्क्षितस्वर्गसाधनयागद्रव्यविशेषसोमसमर्पकं सत् रागप्राप्तताहृशद्रव्यान्तरनिषेधकतया नियमविधिः। नतु गुणविधिः। तत्र शब्दोपात्तमुख्यद्रव्याभावे चार्थिकतन्नियमत्यागेन प्रधानविधेः पुनस्साकांक्षतया, तन्निवृत्त्यर्थं, 'यदि सोमं न विन्देत' इत्यादिप्रतिनिधिशास्त्रेणैव पूतीकान्यद्रव्याणां निषिद्धतया 'प्रतिषिद्धं न प्रतिविधेय'मिति न्यायेन प्रतिनिधित्वासंभवात् पूतीकानां विधानम्" इति चोक्त्वा, ततश्च—सदृशप्राप्तिनियमयोरन्योन्याश्रयमाशंक्य, युगपदुभयनिर्धारणोपपत्तिमुक्त्वा, अन्ते, "तस्मात् प्रतिनिधिमात्रं वा सदृशप्रतिनिधिनियमो

वा शास्त्रादेव, न सादृश्यमात्रादिति सिद्ध्यति। एवं च न तद्दृष्टान्तेनापि शुक्तौ रूप्यावयवसद्भावप्रत्याशा कार्या" इत्युक्तम्। तदिदं सर्वं मीमांसाशास्त्रानभिज्ञतामूलं, तच्छास्त्रवासनावासितान्तः-करणोपहास्य, केवलाग्रहमूलं, स्वयं वेदवेदान्तवैदेशिकस्यापि वैदिक-भूमिकाजिघृक्षामूल चेति सात्त्विकैर्वैदिकोत्तमैस्सर्वथाऽनादरणीयमेव। प्रतिनिधिद्रव्यप्राप्तिर्हि–मुख्यद्रव्यतदवयवादीनां विधिना साधनत्वेऽवगते, तादृशमुख्यद्रव्यालाभे विहितद्रव्यावयवसद्भावनिबन्धनैव। तत्र प्रतिनिधित्वेन रागतः तादृशसदृशावयवमिश्रितानेकद्रव्यप्राप्तौ एकस्य प्रतिनिधिशास्त्रेण नियमः क्रियते। एवं सति 'यदि सोमं न विन्देत' इति नियमविधेः कथं नैरर्थक्यमाशंक्येत। प्रतिनिधिद्रव्यनियम-नार्थत्वात्। प्रतिनिधिद्रव्यप्राप्तिस्तु रागत एव। तत्र प्रतिनिधित्वं कस्य द्रव्यस्येति चेत्—विहितमुख्यद्रव्यावयवमिश्रितसदृशवस्त्वन्तर-स्यैवेति मीमांसाशास्त्रपरिचयवतां विदुषां विदितमेव। ततश्च सदृशे सदृशवस्त्वन्तरसद्भावो मीमासान्यायतस्सिद्ध एवेति शुक्तौ रजता-वयवसद्भावसाधनमुपपन्नमेवेति विश्वविपश्चिद्भिर्विदितम्। अत्र 'प्रतिषिद्धं न प्रतिविधेय'मितीदमनवसरमनर्थकं च। प्रतिनिधिशास्त्रेण निषिद्धत्वात् द्रव्यान्तराणा प्राप्तिर्नास्तीति वक्तुं न शक्यते। प्रतिनिधिशास्त्रा-वतारात्पूर्वमेव तेषा प्राप्तत्वात्। प्राप्तेषु एकस्य नियमं कृत्वा द्रव्यान्तराणि निवर्तयतीत्येव तत्त्वम्। विहितद्रव्यावयवसद्भावात् प्रतिनिधिद्रव्यप्राप्तिरिति तु स्थितमेव। त्वयाप्यन्ते, "न सादृश्यमात्रात्" इति मात्रपदप्रयोगेण सादृश्यात्प्राप्तिरनिषिद्धैव। "सोमाभाव इत्य-साङ्गत्यापत्ते"रिति त्वदुक्तमेवासङ्गतम्। "वैशेष्यात्तु तद्वादस्तद्वादः' इति सूत्रभावानवगतेः। "सोमाभावे" इत्यस्य न काप्यनुपपत्तिः। पञ्चीकरणप्रक्रियया श्यामाकादयः कुतो न गृह्यन्त इति चेत्— पञ्चीकरणप्रक्रियाऽनभिज्ञतामूलमिदम्। भूते भूतान्तरसद्भावे हि

पञ्चीकरणप्रक्रियोपयुज्यते। नत्वेकजातीय एव सदृशे सदृशवस्त्वन्तर-सद्भावे। प्रकृते च व्रीह्यवयवानां नीवारेषु सद्भावात् प्रतिनिधित्वेन ते गृह्यन्ते। नच-श्यामाकेष्वपि व्रीहिसादृश्यात् तदवयवसत्त्वेन श्यामाकग्रहणप्रसंग इति वाच्यम्—श्यामाकेषु व्रीह्यवयवसद्भावे प्रमाणाभावात्। यदि च सादृश्यमेव प्रमाणमित्युच्यते, तदा तत्सदृशावयवास्सन्तु नाम तत्र। अथापि सुसदृशावयवमिश्रितमेव द्रव्यं केवलसदृशावयवमिश्रितद्रव्यापेक्षया प्रतिनिधितया ग्राह्यतममिति मीमांसान्यायसिद्धमिति श्यामाकापेक्षया नीवारेष्वेव सुसदृशावयवसद्भावात् तेषामेव ग्रहणं, न श्यामाकानामिति नियमस्सूपपन्न एव। सादृश्यादेव प्रतिनिधिग्रहणमित्येव शास्त्रविदः। न तु शास्त्रात्। शास्त्रं च द्रव्यविशेषग्रहणनियम एवोपयुज्यते। न तु प्रतिनिधिद्रव्यग्रहणे। तथा च मुख्यद्रव्यालाभे रागतस्सदृशद्रव्यान्तरेषु प्राप्तेषु प्रतिनिधि-द्रव्यविधायकं शास्त्रं द्रव्यविशेषमेव नियमयतीति तादृशशास्त्रार्थानुष्ठाता शास्त्रोक्तकार्येवेति सर्वसंमतम्। षष्ठतृतीये, "सामान्यं तच्चिकीर्षा हि" इति सूत्रे, "तत्र यदि सदृशमुपादीयते ततस्तेषामवयवानां कतिपया लभ्यन्ते। जातिमात्रमवयवान्तरमात्रं च परित्यक्तं भवति। विसदृशोपादाने पुनः समस्तपरित्यागस्स्यात्। अतो व्रीहिशास्त्रमपि यथासंभवमुपपादयितुं सदृशोपादानम्। एवं सुसदृशलाभे मन्दसदृशं नोपादेयम्। सुसदृशे बह्ववयवानुग्रहात" इति, तथान्यत्रोपरि—"साधनत्वं हि पूतीकानामत्यन्ताप्राप्तं विधातव्यम्। प्रतिनिधिनियमे तु पाक्षिकप्राप्तानां नियममात्रं विधीयत इति लाघवं भवति।" इति, तथा, "नहि नीवाराणामङ्गत्वमस्ति, प्रमाणाभावात्। व्रीह्यवयवांस्तु तद्गतान् उपाददानो नान्तरीकतया नीवारानुपादत्ते। नाङ्गतया।" इति, तथा, "नहि श्रुतिः पूतीकानामङ्गत्वमाह। तद्गतानां सोमावयवानां प्रतिनिधिनियमो ह्ययम्।" इत्यादिकं च शास्त्रदीपि-

कोक्तमिहावधेयम्। एवं मीमांसानिर्णये सति "सादृश्यादेव प्रतिनिधिरिति न खलु न्यायविदः। शास्त्रादेव" इति त्वदुक्तमत्यन्तोपहास्यमिति सुस्पष्टम्॥

यदपि चात्र (८०-पु)—"अनिर्वचनीयरजतोत्पत्तिः दुष्टेन्द्रिय-सहकृताज्ञानरूपादुपादानात् भवति। अज्ञानस्याऽऽश्रयाद्यनुपपत्तिस्तु परिहृतैव" इत्यादिकम्। तत् प्रतिज्ञामात्रमेव। अज्ञानाश्रयाद्यनुपपत्तेर्दुष्परिहरत्वस्याधस्ताद्विस्तरेण सम्यगुपपादितत्वात्। मिथ्याभूतस्य शशविषाणादितुल्यस्यानिर्वचनीयस्योत्पत्तिकथा, तदुपादानकथा, तत्र सहकारिकारकोक्तिरित्यादिकमलीकवादिना भवतामेव शोभेत। न प्रामाणिकानाम्। किञ्च—शुक्तौ जायमानस्याऽविद्यापरिणामभूतस्यानिर्वचनीयत्वेन भवदभिमतस्य रजतस्य आपणस्थरजतस्य च को भेदो भवन्मते। अविद्यापरिणामित्वाविशेषात्। नच—दुष्टेन्द्रियसहकारो विशेष इति वाच्यम्। दोषस्य निरूपयितुमशक्यत्वेन दुष्टेन्द्रियासंभवात्। नच—प्रवृत्तिबाधाबाधाभ्या दोषत्वतदभावनिश्चय इति वाच्यम्। स्वप्नावस्थायामेव स्वाप्निकरूपदार्थविषयप्रवृत्तिसंवादस्वप्नस्यापि संभवात् तत्र तादृशस्वाप्निकपदार्थानामपि जाग्रद्दशापदार्थतौल्यापातात्। नचेष्टापत्तिः-भवदभिमतव्यावहारिकप्रातिभासिकभेदानुपपत्तेः। अतोऽनिर्वचनीयोत्पत्तिर्दुरुपपादैव त्वन्मते। अधिकं श्रीभाष्यादिषु परमार्थभूषणादौ च द्रष्टव्यम्॥

यत्त्वत्रैव (८०-पु)-केनापि प्रकारेण निर्वक्तुं न शक्यत इत्येव ह्यनिर्वचनीयत्वम्। एवं सति शुक्तौ जायमानस्यानिर्वचनीयवस्तुनः रजतशब्दभाक्त्वमेव, न घटादिशब्दभाक्त्वमिति नियमः कथमुपपद्यत इत्यनुयोगे-"तत्रापि रजतत्वस्य विलक्षणस्योपगमात्। व्यक्तिमात्रस्यैव निषेधाङ्गीकारात्।-इत्यलं दुर्जनसंभाषणेन" इत्यादिप्रलपनम्, तदेव स्वमतस्य

दौर्बल्यमपरिहरणीयदोषत्वमुद्धाटयति। अहो तव धाष्टर्यम्! स्वस्मिन् विद्यमानं दौर्जन्यं परत्र पश्यसि स्फटिकादाविव रक्तिमानम्। "विलक्षणं रजतत्वं परमङ्गीक्रियते, व्यक्तिमात्रं निषिद्धयते" इत्येतत् व्याहतभाषित्वस्वभावं तव व्यनक्ति। व्यक्तिनिषेधे रजतत्वं परं कुत्र स्यात्। त्वन्मतमिवेदमपि निराधारं तिष्ठेदिति किं मनुषे?। किञ्च—तद्रजतत्वमपि व्यक्तिवदनिर्वचनीयं चेत्, तर्हि तत् रजतत्वमेव न स्यात्। घटत्वमपि स्यात्। यदि च निर्वचनीयं, तदा रजतमनिर्वचनीय मित्येतत् परित्यक्तमेव स्यात्। किञ्च—तत्र रजतत्वे वैजात्यमपि दुर्वचम्। तथाच अनिर्वचनीयत्वमनिर्वचनीयमेवासीदिति तत्र किमपि वक्तुमपारयन् 'अलं दुर्जने'त्यादिपरिदेवनं करोतीति विपश्चितां विस्पष्टमेव। तस्मात ख्यातिबाधयोरन्यथैवोपपत्त्या अनिर्वचनीयता वचनीयतामेव विन्दति॥

अविद्यायाः दुर्निरूपा यतोऽनिर्वचनीयता।
तदनिर्वचनीयत्वानुपपत्तिः प्रतिष्ठिता॥

॥इति चतुर्थः परिच्छेदः॥

## ॥ पञ्चमः परिच्छेदः—प्रमाणानुपपत्तिः॥ (५)

प्रत्यक्षमनुमानं च शब्द इत्येषु च त्रिषु।
नैकमप्यत्र मानं स्यात् तदिह प्रतिपाद्यते॥

पराभिमतस्यभावरूपस्याज्ञानस्य शुद्धचैतन्यरूपं ब्रह्म वा, जीवो वा आश्रयो भवितुं नार्हति। तथा तेनाऽज्ञानेन प्रकाशमात्ररूप-ब्रह्मणस्तिरोधानमपि नोपपद्यते। तादृशाज्ञानस्वरूपमेव चानुपपन्नम्। तस्य सदसद्विलक्षणत्वरूपाऽनिर्वचनीयत्वं चानुपपन्नमिति एतावता सहेतुकं प्रत्यपादि। इतःपरं-परैः तत्र प्रमाणतया प्रत्यक्षानुमानार्थापत्ति-

श्रुत्यादिनिरूपणमनिपुणकृत्यमिति प्रतिपाद्यते। त्वदभिमताज्ञाने न किञ्चिदपि प्रमाणमस्ति। अतस्तदप्रामाणिकमेव॥

(८१-पु) ननु अज्ञानस्याप्रामाणिकत्वमिष्टमेव। साक्षिभास्यं हि एतत्। साक्षी चाविद्यावृत्तिप्रतिबिम्बितचैतन्यमेव। तच्च न प्रमाणम्। एवं चैतादृशसाक्षिभास्यत्वेपि प्रमावृत्तिविषयत्वासंभवेनास्या-प्रामाणिकत्वमनुमन्यत एव। प्रामाण्यं हि अनधिगतार्थगन्तृत्वरूपम्। अन्यथा स्मृतिप्रामाण्यापत्तेः। ईदृशं च प्रामाण्य अज्ञानज्ञाने नास्तीति, अज्ञानगोचराज्ञानान्तरस्वीकारापत्त्या अज्ञानस्याज्ञातत्वाभावाच्च निश्चीयते। यदि चाज्ञातत्वमस्त्यज्ञाने तदापि तादृशाज्ञातत्वविशिष्टा-ज्ञानज्ञानस्य साक्षिरूपत्वमेव। सर्वस्यापि वस्तुनो ज्ञाततयाऽज्ञाततया वा साक्षिभास्यत्वोपगमात्। तथाच साक्षिभास्यत्वेपि प्रमाणवृत्ति-विषयत्वाभावेनाज्ञानस्याप्रामाणिकत्वमिष्टमेव। नचैवं सति अज्ञानविषये प्रमाणनैरपेक्ष्यापत्त्या पुनस्तत्र प्रत्यक्षादिप्रमाणोपन्यासवैयर्थ्यप्रसङ्ग इति वाच्यम्। मानोपनीतासद्व्यावृत्तिविशिष्टाज्ञानस्य साक्षिणा गृह्यमाणत्वात्। तत्रासद्व्यावृत्त्युपनये तावत् प्रमाणाना सार्थक्यात्। तथाच प्रमाणा-नामसद्व्यावृत्तिरूपविशेषणे उपक्षयात् विशेष्यभूताज्ञानस्याप्रामाणिकत्व-मिष्टमेवेति चेत्—त्वयैवैवं महता प्रयासेन अज्ञाने अप्रामाणिकत्वस्य साधितत्वेन अस्माकमत्र न किञ्चित्कर्तव्यमस्ति। यथा निर्गुणब्रह्मविषये प्रमाणवैफल्यं, तथैवात्राप्यज्ञाने तद्वैफल्यम्। उभयत्र हि प्रमाणाना-मन्यत्रोपयोग इति उभयत्रापि अप्रामाणिकत्वमेव फलति। किमिद न लज्जावहं—ब्रह्माऽप्रामाणिकं, अविद्यानिवृत्तिः पर प्रामाणिकी— इति। नच—स्वयंप्रकाशत्वात् नाप्रामाणिकं ब्रह्म। अज्ञान तु अतथात्वात् उक्तरीत्या प्रमाणागम्यत्वाच्चाप्रामाणिकमिति वैलक्षण्यमिति वाच्यम्। ब्रह्मणः स्वयंप्रकाशत्वस्याप्यप्रामाणिकत्वात् त्वन्मते। कि

ब्रह्मणस्स्वयंप्रकाशत्वं ब्रह्मस्वरूपं, उतान्यत्? आद्ये कथं तस्य तत्साधकत्वम्?। अन्त्ये —अद्वैतहानिः। किञ्च—प्रपञ्चस्येव ब्रह्मभिन्नस्य स्वयंप्रकाशत्वस्यापि मिथ्यात्वेन ब्रह्मणः शशशृङ्गतुल्यत्वं वा स्यात्। एवमेव त्वदिष्टाज्ञानस्यापि सर्वथा प्रमाणाविषयत्वे तुच्छत्वमेव स्यात्। मानाधीना हि मेयसिद्धिः। अन्यथाऽतिप्रसङ्गात्। प्रमाण वृत्तिविषयत्वमज्ञानस्य नास्तीत्यपि दुर्वचम्। यथा घटमहं जानामीत्यादौ घटादीनां प्रमाणवृत्तिविषयत्वमङ्गीक्रियते, तथैव न जानाम्यहमिति-जाने इत्यादौ अज्ञानस्यापि प्रमाणवृत्तिविषयत्वावश्यभावात्। अविशेषात्। किञ्च—अज्ञानस्याज्ञातत्वासंभवेन अज्ञानज्ञानस्य अनधिगतार्थगन्तृत्व रूपप्रामाण्यं दुरुपपादमित्युक्तमप्यसाधु। प्रामाण्यस्यातद्रूपत्वात्। अबाधितार्थबोधकत्वमेव प्रामाण्यमित्यङ्गीकारौचित्यात्। स्मृतेरपि प्रामाण्यस्येष्टत्वात्। "स्मृतिः प्रत्यक्षमैतिह्यं। अनुमानश्चतुष्टयम्" इति प्रत्यक्षानुमानशब्दस्मृतीनामविशेषेण प्रामाण्यस्य श्रुतिप्रतिपन्नत्वात्। अनधिगतार्थगन्तृत्वमेव चेत्प्रामाण्यमिष्यते तदा त्वदुक्तरीत्या प्रत्यक्षेणैवाज्ञानस्याधिगतत्वात् तत्र विषये अनुमानश्रुत्यादीनाम-प्रामाण्यापत्त्या, "भावरूपाज्ञाने प्रत्यक्षानुमानार्थापत्तिश्रुतीनां प्रमाणानां जागरूकत्वात्" इति त्वदुक्तमसङ्गतमेव स्यात्। "यथावस्थित-व्यवहारानुगुणं ज्ञानं प्रमा" इति न्यायपरिशुद्धावाचार्यसार्वभौमैरनु-गृहीतम्। विस्तरस्तत्रानुसन्धेयः। एवं चाज्ञानज्ञानस्य निरुक्त-प्रामाण्यसंभवात् अज्ञानस्याप्रामाणिकत्वमपि त्वयोपपादयितुं न शक्यते। किञ्च—प्रमाणानामसद्व्यावृत्तावुपयोगात्, अज्ञानं न प्रमाणविषय इत्यप्यसाधु। अज्ञानस्य प्रमाणाविषयत्वे असद्व्यावृत्तेरपि तत्र दुरवगमत्वात्। नहि व्यक्तिमविषयीकृत्य तत्र विशेषणतया घटत्वादिकमवगमयितुमलं प्रमाणम्। अज्ञानं विषयीकुर्वन्ति, न वा प्रमाणानि?। नाद्यः—प्रमाणाविषयत्वासिद्धेः। नान्त्यः—असद्व्या-

वृत्त्यसिद्धेः। नच—उपनीततयाऽसद्व्यावृत्तिसिद्धिरिति वाच्यम्। सर्वथा प्रमाणाविषये उपनीतमर्यादयापि तदसिद्धेः। ततश्चाप्रामाणिकतयाऽभिमताज्ञानविषये असद्व्यावृत्तये अपि प्रमाणसार्थक्यासंभवेन तद्वैयर्थ्यशङ्का दुष्परिहरैवेति सिद्धम्॥

॥अज्ञाने प्रत्यक्षं न प्रमाणम्॥

'अहमज्ञः, मामन्यं च न जानामी'त्यादिप्रत्यक्षमज्ञानप्रमाणं न भवितुमर्हति। तत्र ज्ञानाभावस्यैव विषयत्वेन भावाज्ञानाविषयकत्वात्। नच धर्मिप्रतियोगिज्ञानाज्ञानाभ्या तत्प्रत्यक्षानुपपत्तिरिति वाच्यम्। 'अहमज्ञ' इत्यादौ ज्ञानसामान्यनिषेधाविषयत्वात्। येन प्रतियोग्यादि ज्ञानसदसद्विकल्पाद्यवकाशः। नहि घटो नास्तीत्यादौ सार्वदिकघटनिषेधः। अन्यथा लोके न कुत्रापि निषेधधीरुपपन्ना स्यात्। सर्वत्रैतद्विकल्पसंभवात्। अपि च प्रतियोगिनो ज्ञानमावश्यकमिति तत्सत्त्वेपि तस्य स्मरणरूपत्वेन तद्विषयभूतस्य निषेध्यज्ञानस्य तदानीमसत्त्वेन तन्निषेधो नानुपपन्नः। प्रतियोगिस्मरणमेव अभावज्ञाने कारणमिति हि न्यायविदः। स्मर्यमाणस्य स्मृतिसमकालीनत्वनियमो नास्तीति प्रसिद्धम्। अधिकं श्रुतप्रकाशिकायामनुसन्धेयम्। किञ्च—अहमज्ञ इतिवत् 'सः अज्ञः, देवदत्तः अज्ञः' इत्यादिप्रतीतिरप्यस्ति। देवदत्तस्य त्वन्मते चैतन्यरूपत्वाभावात् देवदत्तरूपाश्रये एवाज्ञानसिद्ध्या ब्रह्माज्ञानासिद्धिरेव। किञ्च—अहं न जानामीत्यादिवत् अहं न द्वेष्मि, नेच्छामीत्यादिप्रतीतिसद्भावात् तादृशस्थलेऽपि द्वेषाद्यभावमपह्नुत्य भावरूपस्यैवाद्वेषादिकस्याङ्गीकारापत्तिरनिवार्या त्वन्मते। अपि च भावाज्ञानाभ्युपगमेपि आश्रयत्वेन विषयत्वेन चाऽऽत्मप्रतिभासस्यावश्यकत्वेन तस्मिन् विरोधिनि आत्मज्ञाने कथमात्माज्ञानानुभव इति व्याहतिरनिवार्यैव॥

यदत्र (८२-पु) "अज्ञानाश्रयस्वरूपचैतन्यस्य तद्बाधकत्वं नास्ति। अपितु साधकत्वमेव। वृत्तिप्रतिबिम्बितचैतन्यमेव तद्बाधकम्। तथाच नाज्ञानानुभवविरोधः" इत्यादि—तदसङ्गतम्। नह्यत्र 'अहमज्ञः' इति आत्मस्वरूपचैतन्यमात्रस्फुरणमस्ति। येन तत्स्फुरणमज्ञानानुभवाविरुद्धमिति कथनमुपपन्नं स्यात्। अपितु अज्ञानाश्रयत्वविषयत्वाभ्यां प्रतीयते आत्मा। ईदृशप्रतीतिश्चात्मविषयिणी वृत्ति विना नोपपद्यत इति वृत्तिप्रतिबिम्बितचैतन्यस्फुरणमस्तीति कथमज्ञानानुभव इति व्याहतिरनिवार्यैव। निर्विशेषप्रकाशमात्रस्वरूपचैतन्ये विशदाविशदावभासकथा तु सुतरामसङ्गता। अतः अहमज्ञ इत्यादौ न भावरूपाज्ञानसिद्धिः। प्रागभाव एव विषय इत्यन्यथैवोपपत्तिः। तवापि प्रागभावस्येष्टत्वात्। किञ्च—भावाज्ञानविषयिणी प्रतीतिर्हि जायमाना न भावत्वानुविद्धा उदेति। अपितु अज्ञः न जानामीत्याद्यभावानुविद्धैव। सति चैवं कथं न प्रतियोगिज्ञानाद्यनपेक्षत्वमिति तत्सापेक्षत्वेन पुनर्व्याघातस्तदवस्थ एव॥

यदपि चात्रैव (८२-पु) "अथापि तुष्यतु दुर्जन इति न्यायेन अभ्युपगम्य विचार्यमाणे, त्वन्मते ज्ञानस्य अविशदस्वरूपविषयत्वं वक्तुं न शक्यते। तव किंनामावैशद्यं स्वरूपस्य?। न तावदभावनिरूपकतयाऽवभासित्वम्। अभावज्ञानात्प्रागेव आश्रयस्य प्रतियोगिभूतज्ञानस्य चावश्यज्ञेयत्वात" इत्यादिकं—तत्सर्वं, स्वमतोपरि सुतरां दुष्परिहरदूषणोद्भावनजनितनिरन्तरदुःखाक्रान्तदुर्जनपरिदेवनमेवेति विभावनीयम्। श्रीभाष्यश्रीसूक्तियथावस्थितार्थपरिज्ञानवतः कस्यापि वैशद्यावैशद्यविषये नेत्थं विकल्पो जायेत। इत्थं हि तत्रत्या श्रीसूक्तिः, "यस्सांशस्सविशेषः प्रकाशविषयः, तस्य सकलावभासो [illegible]दावभासः। कतिपयविशेषरहितावभासश्चाविशदावभासः। तत्र

य आकारोऽप्रतिपन्नः तस्मिन्नंशे प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यते। यश्चांशः प्रतिपन्नः तस्मिन्नंशे तद्विषयप्रकाशो विशद एव। अतस्सर्वत्र प्रकाशांशेऽवैशद्यं न संभवति। विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम्॥" इति। एतेन—प्रकाशांशे वैशद्यमेव। विषयेऽपि स्वरूपे वैशद्यमेव। स्वरूपगत-विशेषेष्वेव वैशद्यावैशद्ये निरूपणीये। सकलविशेषावभासे वैशद्यं, कतिपयविशेषानवभासेऽवैशद्यमिति सिद्ध्यति। तथाच तदभाव-निरूपकतयाऽवभासित्वादिविकल्पो दूरोत्सारितः। एवं चात्मविषय प्रमाणज्ञानं स्वविषयेणात्मना सह स्मृत्यारूढं सदविशदतया प्रतीतमभावप्रतियोगि भवितुमर्हतीत्यस्मत्पक्षे सुतरामुपपन्नम्। त्वत्पक्षे तु अविषये निर्विशेषे प्रकाशमात्रे ब्रह्मस्वरूपे प्रकाशमाने तद्गतकतिपय-विशेषाप्रतिभासरूपावैशद्यमुपपादयितुमशक्यमिति वैशद्यावैशद्यप्रस्तावः असङ्गत एव। इत्थं चेयं प्रतीतिरभावविषयिण्युपपद्यत एव॥

यदत्र (८३-पु) "'न जानामी'ति प्रतीतेः ज्ञानविशेषाभाव-विषयकत्वे प्रतिविषयं प्रतियोगिभूतज्ञानानन्त्येन तज्ज्ञानमेव दुर्घटं भवेत्। यद्यप्यत्र घटत्वादिजात्यवच्छिन्नतया प्रतियोगिज्ञानं सुलभम्। तथापि 'न किञ्चिदपि जानामी'त्यादिभिन्नविषयकज्ञानाभावानु-भवानुपपत्तिः" इत्यादि—तन्न समीचीनम्। यद्विषयकज्ञानं निषिध्यते घटमहं न जानामीत्यादौ, तत्र प्रतियोगिभूतज्ञानस्य घटादिविषयकस्य आनन्त्याभावात् न प्रतियोगिज्ञानं दुर्घटम्। घटादिविषयानन्त्येऽपि प्रतियोगितावच्छेदकावच्छिन्नविषयकज्ञानस्य सुघटत्वात्। 'न किञ्चिदपि जानामी'त्यादिप्रतीतिरपि नानुपपन्ना। तत्रापि विशेषस्यैव विवक्षावश्यंभावात्। अन्यथा 'न किञ्चिदपि जानामी'त्यपि न जानीयात्। जाग्रतस्तस्य यत्किञ्चिज्ज्ञानस्यावश्यंभावात्। नच

प्रतियोगिज्ञाने ज्ञायमाने घटादिरूपविषयस्यापि ज्ञायमानत्वेन तदज्ञानानुभवानुपपत्तिरिति वाच्यम्। प्रतियोगिस्मरणस्यैव अभाव ज्ञानहेतुत्वमिति पूर्वमेवोक्तत्वात्। स्मरणे च तद्विषयज्ञानस्य वा तद्विषयस्य घटादेर्वा सद्भावनियमाभावेन तदज्ञानानुभवः सूपपन्न एव। नच सुखादिवदपरोक्षानुभवरूपत्वेनाऽस्याः 'अहमज्ञः' इत्याकारप्रतीतेः नाभावविषयत्वमिति वाच्यम्। 'अहं सुखाभाववान्' इतिवत् ज्ञानाभाववानित्यप्युपपत्तेः। अपरोक्षत्वं च नानुपपन्नम्। सुखं हि मानसप्रत्यक्षविषय इति तदभावश्च तेनैव गृह्यत। एवं च सुखविषय इव ज्ञानविषयेऽपि ईदृशापरोक्षानुभवस्योपपत्तिस्सुवचैव। तथाचाभावविषयत्वेपि अपरोक्षत्वमुपपन्नमेव। नच ज्ञानत्वसामान्या वच्छिन्नप्रतियोगिताकाभावप्रतीतेः यावज्ज्ञानविशेषविरुद्धत्वेन तदभावा संभवात् अभावबुद्धिवैलक्षण्यं स्वीकरणीयमिति वाच्यम्। सामान्य निषेधाविषयत्वस्य पूर्वमेवोक्तत्वात्। तथासति तदानीन्तनप्रतीतेरपि निषेधापत्तेः। एतेन—प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानस्यैवा भावबुद्धिहेतुत्वेन सामान्यतः प्रतियोगिज्ञानात् विशेषतः ज्ञानाभाव-ज्ञानोपपादनासंभवेन न ज्ञानाभावविषयकत्वमिति त्वदुक्तं निरस्तम्। प्रतियोगिस्मरणस्यैवाभावबुद्धिहेतुत्वाभ्युपगमेन विरोधाभावात्। किञ्च-सामान्यतः प्रतियोगिज्ञानात् विशेषतः ज्ञानाभावज्ञानोपपादनासंभवेनेत्ये तदेवासङ्गतम्। तथानुक्तेरेव। नहि द्रव्यत्वेन प्रतियोगिज्ञानं घटा-भावबुद्धिहेतुरिति ब्रूयादनुन्मत्तः। अतः पूर्वोक्तरीत्या प्रागभावविषयत्वेनैव तत्प्रत्यक्षोपपत्त्या न तेन प्रत्यक्षेण त्वदीयभावरूपाज्ञानसिद्धिः। नच-प्रागभावे मानं नास्ति। तस्याभावाऽऽवारकत्वं च नोपपद्यत इति वाच्यम्। 'इह घटो भविष्यती'त्यादेरेव तत्र प्रमाणत्वात्। तस्यैव प्रागभावस्य घटत्वाद्यवस्थापूर्वावस्थारूपत्वमित्येतत्त्वन्यत्। ज्ञाना-भावस्याऽऽवारकत्वं न कोपि वदति। ज्ञानाभावस्य ज्ञानावस्थाविशेषरूपस्य

कर्महेतुकत्वेनैव प्रामाण्यात्। "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप! सर्वगा॥" इत्यादिप्रमाणस्वारस्यात्। न वयं 'अहं न जानामी'त्यादिप्रतीतिविषयज्ञानप्रागभावस्य जीवधर्मभूतज्ञानावारकत्वमभ्युपगच्छामः। अज्ञानपदमविद्यापर्यायं सत् कर्मार्थकमपि। "विद्यां चाविद्यां च" इत्यादावविद्यापदं कर्मार्थकमेव व्याख्यातं श्रीशाङ्करभाष्येऽपि। 'न जानामी'त्यादौ तु ज्ञानाभाव एव विषयः। नास्याऽऽवारकत्वम्। पूर्वोक्तकर्मण एव तत्त्वम्। तच्च कर्म भगवत्सङ्कल्परूपमेव। नादृष्टादिरूपम्। एतच्च "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इत्यादौ स्पष्टमवसीयते॥

यदप्युक्तं (८४-पु) "अज्ञानमिति प्रत्यये पुरुषविशेषनिरूपितविषयविशेषाश्रितमज्ञानत्वरूपाखण्डधर्मविशिष्टमेव विषयः। न जानामीत्यस्याप्यधर्मपदवत् अज्ञानत्वजातिविशिष्टविषयकत्वमेव। तस्मादज्ञानमित्यत्र तत्प्रतियोगित्वाद्युल्लेखे प्रमाणं नास्ति" इति। तदिदमप्यसङ्गतम्। अधर्मपदवदिति दृष्टान्तस्यैवासिद्धेः। नहि घटादिपदवत् अधर्मपदमिति सम्प्रतिपन्नम्। न धर्मः अधर्म इति हि व्युत्पत्तिः। तथा च तत्र धर्मविरुद्धत्वेनैवाधर्मपदं पापवाचकमिति स्थितम्। एवमेवाज्ञानपदमपि न ज्ञानमज्ञानमित्येव व्युत्पन्नम्। तत्र नञः तदभाव-तद्विरुद्ध-तदन्यत्वान्यतमार्थकत्वं यथायथं भविष्यति। सर्वत्र प्रतियोगिसापेक्षत्वं अविशिष्टमेवेत्येतन्नापह्नोतुं शक्यम्। ज्ञानाभावार्थकत्वे वा विपरीतज्ञानार्थकत्वे वा ज्ञानस्वरूपात्मभिन्नजडार्थकत्वे वा न कुत्रापि अज्ञानपदस्य प्रतियोगिभूतज्ञाननैरपेक्ष्येणार्थबोधकत्वमित्येतत्संप्रतिपन्नम्। "अज्ञाने नष्टे ज्ञानविरोधितया तदनुभवाभिप्रायेति न सा विरुद्ध्यते" इति विवरणोक्तिसामञ्जस्यसंपादनमसङ्गतम्। विवरणोक्तिर्हि "अज्ञानमिति हि

अविद्याशक्तिः ज्ञानद्वयपर्युदासेनोच्यते" इति। कथमियमुक्तिः अज्ञाननाशानन्तर ज्ञानविरोधितया तदनुभवाभिप्राया भवितुमर्हति। (८४-पु) "यथा ज्ञानाभावज्ञानमते घटाज्ञानमिति प्रतियोगि ज्ञानद्वारा तदवच्छेदकतया घटाद्यवभान, तथा न जानामीत्यत्रापि अज्ञानावच्छेदकतया घटाद्यवभानम्। अज्ञानस्यापि सविषयत्वात्। तत्रैवं सति प्रतियोगिज्ञानं प्रथमं न निरूप्यते" इत्यादि त्वदुक्तमपि न सङ्गच्छते। न जानामीत्यस्यैव ज्ञानाभावविषयकत्वौचित्येन अज्ञानविषयकत्वाप्रसिद्धेः। औचित्यं चाधस्तादेव निरूपितम्। अज्ञानपदमपि ज्ञानाभावत्वेनैवार्थबोधकं भवेत्। न त्वखण्डरूपेणेत्येतावदत्र निरूप्यते। अत्र "अज्ञानस्य ज्ञानविरोधित्वादिना ज्ञेयत्वेपि न विरोध." इति त्वदुक्तमतीवासङ्गतम्। प्रतियोगिज्ञानसदसद्भावाभ्यां व्याघातानतिपातात्। स्वरूपचैतन्यस्य तु अज्ञानावच्छेदकतया भानमेव त्वन्मतविरुद्धम्। मामन्य च न जानामीत्यत्र हि साश्रयविषयतयैवाज्ञानं भासते। कथमत्र विषयाश्रयसम्बन्धिज्ञानविरोधित्वेन भवदभिमताज्ञानभान संभवेत्। एवं च अहमज्ञः मामन्यं च न जानामीत्यादि-प्रतीतीनामन्यथैव निर्वाहात् त्वदभिमताप्रामाणिकभावरूपाज्ञान न कथमपि प्रसिद्ध्येत्। नच—विरोधिज्ञानं साक्षिरूपमेव। तच्च न प्रमाणज्ञानमिति पूर्वमेवोक्तम्। तथा च तादृशसाक्षिणा अज्ञानानुभवो न विरुद्ध्यत इति वाच्यम्। साक्षिप्रमाणज्ञानादीनामेवानुपपन्नत्वात् स्वरूपापेक्षया विषयविशेषाभावे प्रमाणज्ञानवैलक्षण्यस्य वा प्रकाशमात्र-स्वरूपस्याचेतयानस्य ब्रह्मणस्साक्षात् द्रष्टरि संभावनीयसाक्षित्वस्य वा निरूपयितुमशक्यत्वात्। नच—वृत्तिप्रतिफलितचैतन्य प्रमाणज्ञानमिति सुवचं वैलक्षण्यमिति वाच्यम्। जडात्मकवृत्तिप्रतिफलनं प्रकाशात्मनो ब्रह्मणोऽसंभवीति पूर्वमेव दत्तोत्तरत्वात्। नहि मुखे दर्पणप्रतिफलनं

वा जपाकुसुमे स्फटिकप्रतिफलनं वा कश्चिदनुन्मत्तो ब्रूयात्। किञ्च—ज्ञानविरोधित्वेनाज्ञानस्य भानाङ्गीकारे विरोधितानिरूपकं ज्ञानं प्रमाणज्ञानमेव भवितुमर्हति। तस्यैवाज्ञाननिवर्तकतया विरोधित्वाङ्गीकारात्। ततश्च प्रमाणज्ञानावश्यंभावेन तद्विरुद्धाज्ञानानुभवः न संभवेदेव। नच विरोधिभूतप्रमाणज्ञानस्य साक्षिभास्यत्वेन इदानीमभावेपि न विरोध इति वाच्यम्। मामन्य च न जानामीत्यादौ साक्षिभास्यत्वासंभवेन प्रमाणज्ञानावश्यंभावस्यानतिलंघनीयत्वात् विरोधतादवस्थ्यात्। अपिच—सविषयमज्ञानमनुभूयते इति चेत्—तदाऽज्ञानस्य विषयावारकत्वमेव सविषयत्वमिति तादृशविषयावच्छेदकतया प्रमाणज्ञानावश्यंभावेन तद्विरुद्धतयाऽज्ञानानुभवासंभवस्तदवस्थ एव। नच—अज्ञानस्य सविषयत्व न विषयावारकत्वरूपम्। तथा सति अज्ञानमच्चे विषयाननुभवापत्तेः। किन्तु विषयसम्बद्धव्यवहारयोग्यतापादकत्वमेव। तच्च प्रमाणज्ञानमन्तरापि संभवतीति न विरोध इति वाच्यम्। व्याघातात्। ब्रह्माज्ञानं ब्रह्माऽऽवृणोति। आवरणं च 'अस्ति प्रकाशते'-व्यवहारसामग्र्या सत्या 'नास्ति न प्रकाशते'-व्यवहारयोग्यतापादकत्वमेवेति पूर्वमुक्तं त्वया (६१-६२ पुटयोः)। ततश्चात्राज्ञानं ब्रह्मविषयमिति अस्याज्ञानस्य ब्रह्मावारकत्वं न स्यात्। व्यवहारयोग्यतापादकत्वं च सुतरामसंभवीति पूर्वं विस्तरेणोपपादितमेव। किञ्च—स्वरूपे प्रकाशमाने नास्त्यादिव्यवहारयोग्यतापादकत्वमेवाज्ञानस्य न वक्तुं शक्यते॥

यदुक्तं (८५-पु) "न जानामीत्यनुभवविषयः ज्ञानावस्थाभेद एवेति वक्तुमयुक्तम्। नित्यज्ञानस्यावस्थाभेदपरिणामानुपपत्तेः" इति। तदुपहास्यमेव। भवन्मतेपि नित्यस्य चैतन्यस्य, मिथ्यात्वेनापि वा अमुक्तयवस्था संसारावस्थायां, मुक्त्यवस्था भाविनीति चाङ्गीक्रियत एव। किमिदं न विरुद्धम्?। वस्तुतः "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते"

इत्यादिप्रामाण्यात् नित्यत्वेनावस्थितस्यापि धर्मभूतज्ञानस्य "प्रज्ञा च तस्मात्प्रसृता पुराणी" इत्यादिप्रमाणवशात् संकोचविकासरूपावस्था प्रामाणिक्येवेति न कश्चिद्विरोधगन्धोपि॥

अत्रैव (८५-पु) "एतेन......प्रत्युक्तत्वात्" इत्यन्तं पूर्वमेव निरस्तम्॥

यदपि चात्र (८५-पु) नित्यमुक्तस्वप्रकाशस्वरूपस्य ब्रह्मणस्तिरोधानमसंभवि। स्वप्रकाशस्वरूपे तस्मिन् स्वतः परतो वा तिरोधानासंभवात्। तथासति स्वरूपनाश एव प्रसजेदित्यनुयोगे, "नास्त्यादिव्यवहारार्हतापादनमेव तिरोधानं, तच्च स्वप्रकाशेपि संभवेत्। आब्रह्मज्ञानावस्थायि च। अतस्तावदात्मनोऽज्ञानोपसृष्टस्वरूपत्वमेवेति न स्वरूपनाशप्रसक्तिः" इत्याद्युक्तम्। तदप्यसङ्गतम्। व्यवहारयोग्यतापादकत्वरूपस्य तस्याधस्तादेव निरस्तत्वात्। नहि स्वरूपे प्रकाशमाने प्रकाशविषये किञ्चिदप्यकृत्वा नास्त्यादिव्यवहारयोग्यतामात्रमापादयितुमलमज्ञानम्। किञ्च—आत्मनः अज्ञानोपसृष्टत्वं नाम किम्?। अज्ञानेनात्मनि यत्किञ्चित्क्रियते? नवा?। नाद्यः—स्वरूपनाशपर्यवसानावश्यंभावात्। नान्त्यः—नास्त्यादिव्यवहारयोग्यताऽसंभवादेव॥

किञ्च—अज्ञानं स्वरूपसत् ब्रह्म तिरस्करोति? उतानुभूतं सत्? नाद्यः — काचादिदोषस्येवाज्ञानस्य ज्ञानबाध्यत्वासंभवात्। नान्त्यः—तिरोधानमकृत्वैव प्रथममज्ञानस्यानुभवविषयत्वे च तेनैव न्यायेनातिरोहितस्वरूपस्यैव ब्रह्मणः प्रपञ्चानुभवसंभवेन तदर्थं ब्रह्मावारकतया तदज्ञानकल्पनावैयर्थ्यप्रसङ्गात्। अपि चाज्ञानानुभवे तिरोधानसंभवः। तिरोहिते एव चाज्ञानानुभवसंभव इति चान्योन्याश्रयदोषश्च। ब्रह्मणोऽज्ञानानुभवः किं स्वायत्तः? उतान्यायत्तः?।

आद्ये अनिर्मोक्षप्रसङ्गः। अनुभूतिस्वरूपस्याज्ञानानुभवस्वरूपत्वेन शुक्तिरजतबाधकज्ञानेन मिथ्यारजतानुभवस्येव निवर्तकज्ञानेन अज्ञानानुभवस्वरूपब्रह्मणो निवृत्तिप्रसङ्गो वा। अन्त्ये च—अन्यत् अज्ञानान्तरं चेत् अनवस्था। तदेव चेदज्ञानं—स्वरूपसत एव ब्रह्मावारकत्वमिति काचादिवत् ज्ञानाबाध्यत्वप्रसङ्गः। एतच्चिखण्डयिषया यदत्र (८५-८६ पुटयोः) "तत् तुच्छम्। अज्ञानस्य साश्रयत्वेन धर्मिग्राहकमानसिद्धत्वात् अज्ञानानुभवतिरोधानयोरनादित्वेन युगपत्संभवात् न परस्पराश्रयदोषः। अज्ञानमूलक एवात्मनः परागर्थानुभव इति न तिरोधानकल्पनानर्थक्यम्। अज्ञानानुभवस्याप्यज्ञानप्रयुक्तत्वात् प्रमाणजन्याखण्डाकारवृत्त्युपारूढ-प्रकाशबाध्यत्वसंभवात् नानिर्मोक्षप्रसङ्गश्च। काचादिवत् बाधाध्यप्रसङ्गोऽपि न। काचादेरपि निवृत्त्यनुभवात् सर्वत्र विषयबाधेपि बोधबाधादर्शनात् अविशेषात् स्वरूपचैतन्यस्यापि न स्वरूपनाशप्रसङ्गः" इत्यादिकमुक्तम्। तदिदमेवातितुच्छम्। अज्ञानं चेत्साश्रयत्वेनैव धर्मिग्राहकप्रमाणसिद्धं तर्हि ज्ञानमपि साश्रयसविषयत्वेनैव तादृशप्रमाणसिद्धमिति तत्र परं कः प्रद्वेषः? येन निराश्रयविषयमेव ज्ञानमिति दुराग्रहः क्रियते। किञ्च धर्मिग्राहकप्रमाणेन न भावाज्ञानप्रसिद्धिरिति निरूपितमेवाधस्तात्। मिथ्याभूतस्यानादित्वमप्रामाणिकमित्यपि शतशो विस्तृतम्। अतः परस्पराश्रयो न निस्तीर्यते। नहि—"अज्ञानमूलक एवात्मनः परागर्थानुभवः" इत्युक्तिमात्रेण तिरोधानकल्पनासार्थक्यसंपादनं शक्यम्। परागर्थानुभवमूलभूताज्ञानं किं अनुभूतं सत् तिरस्करोति, तिरस्कुर्वत्सत् अनुभवविषयीभवतीत्यादिपूर्वोक्तविकल्पानतिपातात्। अज्ञानानुभवस्याज्ञानमूलकत्वाभ्युपगमेपि मूलभूतं तदज्ञानं स्वानुभवाय अज्ञानान्तरापेक्षं चेत् अनवस्था। तदेव स्वरूपसदेव कार्यकरं चेत् ज्ञानाबाध्यत्वप्रसङ्गो दुष्परिहर एव। वृत्त्युपारूढप्रकाशस्य केवलप्रकाशस्य च विषयवैलक्षण्याभावे बाधकत्वौपयिकं वैलक्षण्यं कथमप्युपपादयितुमशक्यमिति निरूपितं

पुरस्तादेव। "काचादेरपि निवृत्तिदर्शनात्" इति त्वदुक्तमुपहास्यतमम्। न ह्यधिष्ठानतत्त्वज्ञानेन रजतानुभवनिवृत्तिवत् काचादिनिवृत्तिर्जायते तत्र। अहो भवतां व्युत्पत्तिवैपरीत्यम्। ब्रह्मज्ञानेन निवृत्तिस्तु सर्वसमाना। यथा बोधो न बाध्यते तथैव विषयोपि न बाध्यते। प्रवृत्तिस्तु कुत्रचित् बाध्यते कुत्रचित् तु नेति तत एव बोधादेर्बाध्यत्वाबाध्यत्वादिव्यवहार इति च समर्थितम्॥

आत्मा चेत्सविशेष इति सिद्धान्तः, तदा विशदाविशदावभास आत्मेति वक्तुं युक्तम्। स चेन्निर्विशेष इति मतं, कथं तर्हि विशदाविशदावभासाभ्युपगमो युक्तस्स्यात्? नच—अज्ञानसंवलितात्मप्रकाश एवास्मन्मतेऽविशदावभासः इत्युच्यते। न तु विकलावभासः। अतस्सांशत्वादिप्रसङ्गो नास्ति। विशदावभासश्च तदा भवति यदा तत्त्वज्ञानेनाज्ञानोपसर्गरूपावैशद्यबाधो भवति। सोपि नापूर्वतया भवति। अपि तु स्वभावसिद्धविशदस्वरूपावभासः आत्मा अभिव्यज्यत इत्येतावदेव। नातो मुक्तस्यानित्यताप्रसङ्गश्च। स्वरूपज्ञानस्याज्ञानाविरोधित्वेन मुक्तानुभाव्यस्य तस्य ज्ञानस्य स्वभावसिद्धत्वेपि न दोषः इति वाच्यम्। स्वयंप्रकाश आत्मनि अज्ञानसंवलनस्य निरूपयितुमशक्यत्वात्। नच भवन्मते आत्मनां कर्मसम्बन्धस्यानादित्वात् यथा संभवः, तथैवास्मन्मते अज्ञानसंवलनस्यानादित्वात् संभव इति वाच्यम्। वैषम्यात्। नहि वयं कर्म मिथ्याभूतमिति वदामः। प्रवाहतस्तु अनादि कर्मेति वयम्। तव तु मते अज्ञानं मिथ्याभूतम्। मिथ्याभूतस्य दोषमूलकत्वेऽनादित्वासंभव इति च पूर्वमुपपादितमेव। किञ्च—अज्ञानसहभावेन परं कथं ब्रह्मणोऽवैशद्यं स्यात्?। नहि घटसहभावेन पटस्य वा इच्छासाहचर्येण ज्ञानस्य वाऽवैशद्यं दृष्टम्। अपि च स्वभावसिद्धविशदावभासं ब्रह्म अभिव्यज्यत इत्येतदपि व्याहतम्। स्वभाव-

सिद्धविशदावभासस्यानभिव्यक्तेः कारणाभावात्। अज्ञानं तु मिथ्याभूतं न तत्कारणमुपपन्नं भवेत्। नच—भवन्मतेपि विशदाविशदावभास-निरूपणमशक्यमेव। कस्यापि पदार्थस्य सर्वांशेनाप्यवगन्तुमशक्यत्वेन सर्वत्राविशदावभास एव स्यात् न त्वेकत्रापि विशदावभास इति वाच्यम्। इष्टत्वात्। सर्वांशेनापि विशदावभासस्य मुक्तिकालीनत्वात्। येष्वंशेष्ववभासो विद्यते तत्रैव वैशद्यम्। यत्र त्वंशे भान नास्ति तत्र नास्त्येवावभासः। इत्थ च पदार्थस्य यत्किञ्चिदंशविशिष्टतया भानं विशदावभ.स', यत्किञ्चिदंशविशिष्टतयाऽभानं अविशदावभासः इति विशदाविशदत्वे उपपन्ने। सर्वांशविशिष्टतया भानं सर्वकर्मक्षय एवेति तत्त्वम्॥

यदपि चात्रैव (८६-पु) "अथवा अखण्डाकारमनोवृत्त्यभि-व्यक्तिरेव ब्रह्मणो वैशद्यम्। सर्वस्यैव मनोवृत्त्यभिव्यक्तचैतन्यतादात्म्येनैव विशदावभासित्वात्। एवं चाज्ञानबाधे वैशद्यावैशद्यादिविकल्पातीत-स्वप्रकाशब्रह्मात्माभिन्नतयाऽवस्थानं कैवल्यमिति नानित्यत्वादिशंकाव-काशः। तस्मादहमज्ञो मामन्यं च न जानामीत्यादिप्रत्यक्षानुभवो भावाज्ञानविषयक एव" इत्युक्तम्। तदिदमसारम्। व्यङ्ग्यव्यञ्जक-भावस्य लोकविलक्षणस्य प्रमाणविरुद्धस्य स्वकपोलमात्रकल्पितस्य सर्वथा निषिद्धत्वात्। नहि जडेन चैतन्याभिव्यक्तिरनुपहास्या। तथा सति शान्ताङ्गारेणापि सहस्ररश्मेरभिव्यक्त्यापत्तेः। अन्यच्च विचित्रं यत्—सर्वस्यापि घटपटादेरपि जडभूतस्य विशदावभासित्वं मनोवृत्त्यभि-व्यक्तचैतन्यतादात्म्येनेत्युच्यते—इति। अपिच-"अज्ञानबाधे सति ब्रह्मावभासः विशदोपि न भवति नाविशदोपि। स्वरूपेणावस्थान" मित्येतदप्यसङ्गतम्। अज्ञाने सत्यपि वैशद्यमवैशद्यं वा ब्रह्मावभासस्येति निरूपयितुमशक्यत्वात्। अज्ञान हि "नास्ति न प्रकाशते" इति

व्यवहारयोग्यतापादकं भवदभिमतम्। ततश्च तादृशव्यवहारयोग्यतायां च ब्रह्मणोऽप्रकाशोऽवश्यंभावी। अप्रकाशे च ब्रह्मणि वैशद्यमवैशद्यं वा दुरुपपादमेव। "प्रकाशमान एव वस्तुनि वैशद्यावैशद्यविकल्पः" इति हि त्वदभिमतम्। किञ्च-"राहुग्रस्तस्य चन्द्रस्येव ब्रह्मणः प्रकाशः" इति भवदुक्तमपि भवदभिमतविरुद्धम्। तत्र हि चन्द्रस्य राहुणा ग्रासः, तेन च तत्प्रकाशस्य नाशः प्रतिबन्धो वा प्रसिद्धः। अपि च प्रकाशमान एव वस्तुनि 'नास्ति न प्रकाशते' इति व्यवहारार्हता च दुरुपपादैव। इत्थं च भवदभिमतनित्यमुक्तस्वप्रकाशमात्रस्वरूपब्रह्मावारकभावरूपाज्ञानं सर्वात्मनाऽनुपपन्नमेवेति, तत्र ज्ञानाभावविषयकत्वेनैव निर्वाह्यतयाऽन्यथासिद्धं 'अहमज्ञो मामन्यं च न जानामि' इत्यादिप्रत्यक्षं प्रमाणं नैव भवितुमर्हतीति सिद्धम्॥

॥ भावरूपाज्ञानेऽनुमानप्रमाणानुपपत्तिः॥

विवादपदं प्रमाणज्ञानं,—स्वप्रागभावव्यतिरिक्तस्वविषयावरण-स्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्-इतीदमनुमानं भावरूपाज्ञाने प्रमाणमिति परे। अन्धकारप्रदेशे प्रथमतः उत्पन्ना प्रदीपप्रभा हि पूर्वमप्रकाशितघटादिप्रकाशिका सती स्वप्रागभावव्यतिरिक्तं स्वविषयभूतघटपटाद्यावारकं स्वसमानदेशवर्ति भावरूपं तमो निवर्तयतीति दृष्टम्। तथा ब्रह्मविषयं प्रमाणज्ञानमपि स्वप्रागभावातिरिक्तं स्वविषयभूतब्रह्मावारकं स्वदेशब्रह्मगतं भावरूपं किमपि निवर्तयतीत्यङ्गीकर्तव्यम्। अप्रकाशितार्थरूपब्रह्मप्रकाशकत्वात्। तदेवाज्ञानमिति सिद्ध्यतीति पराभिमतिः। परं तु अस्यानुमानस्य दुष्टत्वात् न भावाज्ञानसाधकत्वम्। तथाहि— प्रमाणज्ञानं अप्रकाशितार्थप्रकाशकं चेत् उक्तवस्त्वन्तरपूर्वकमेवेत्युक्तौ, प्रकृते उक्तानुमानजन्या भावाज्ञानविषयिणी अनुमितिरपि पक्षबाचक-

प्रमाणज्ञानपदसंगृहीतेति सापि अप्रकाशिताज्ञानरूपार्थप्रकाशकत्वेन उक्तरीत्या अज्ञानान्तरवस्तुपूर्विकैवेति तेनाज्ञानान्तरेण सिषाधयिषिता-ज्ञानावरणे, ब्रह्मणाऽसाक्षात्कृतस्य तस्य सिषाधयिषिताज्ञानस्य ब्रह्मावारकत्वासंभवेन तत्कल्पनस्यैव वैयर्थ्यप्रसङ्गः। यदि चाज्ञाना-न्तरमनेनानुमानेन न सिद्ध्यतीत्युच्यते तदा हेतोर्व्यभिचारप्रसंगः। दृष्टान्ते प्रभायाः प्रकाशकत्वाभावेन साधनवैकल्यं च। नहि ज्ञानादन्यत्र प्रकाशकत्वं दृष्टचरम्। दीपालोकादौ प्रतिबन्धकनिवर्तनद्वारा उपकारकत्वमात्रेणैव प्रकाशकत्वव्यपदेशः। अन्यथा इन्द्रियाणामपि ज्ञानोत्पत्तावुपकारकत्वाविशेषात् प्रकाशकत्वापत्तेः। तेन च तेष्वेवेन्द्रियेषु उक्तरीत्या हेतुसत्त्वेन साध्याभावात् अनैकान्त्यप्रसंगस्स्यात्। किञ्च-जडज्ञानमात्रे च व्यभिचारप्रसंगः। जडावारकाज्ञानस्य भवद्भिरङ्गीकारात्। ततश्च स्वविषयावरणेत्यादिसाध्याभावेन उक्तहेतुसत्त्वात्। विशेषतस्तु श्रीभाष्यश्रुतप्रकाशिकादिषु द्रष्टव्यम्॥

यदत्र, (८७-८८-पु) "अज्ञानेऽनभिमताज्ञानान्तरसिद्धावपि ब्रह्मस्वरूपतिरोधायकाज्ञानावारकाज्ञानान्तरसाक्षित्वमात्मनो न व्याहन्यते। यादृशमज्ञानावच्छिन्नचैतन्यमिदमज्ञानमावृणोतीत्युच्यते, तादृशचैतन्ये-नाज्ञानान्तरानुभवे दोषाभावात्। स्वावृतप्रकाशप्रकाश्यत्वादज्ञानस्य। अज्ञानान्तरस्यापि ब्रह्मस्वरूपतिरोधायकत्वाभ्युपगमे बाधकाभावाच्च।" इत्यादि--तन्न साधु। अनभिमताज्ञानान्तरसिद्धौ तेन सिषाधयिषिता-ज्ञानस्याऽऽवृतत्वे तत्कार्यासिद्धेर्वैयर्थ्यप्रसङ्गो दुष्परिहर एव। अज्ञानान्तरसाक्षित्वमात्मनो व्याहन्यते वा नवेत्यन्यदेतत्। नैतावता वैयर्थ्यप्रसङ्गपरिहारस्सिद्ध्येत्। किञ्च-"यादृशमज्ञानावच्छिन्नचैतन्य-मिदमज्ञानमावृणोतीत्युच्यते" इत्यादिकमसङ्गतमेव। अज्ञानमेव ह्यावारकमुच्यते। न तदवच्छिन्नचैतन्यम्। "स्वावृतप्रकाशप्रकाश्यत्वाद-

ज्ञानस्य" इत्येतदतिविचित्रम्। प्रकाशस्याज्ञानावृतत्वमसङ्गतम्। आवृतेन च प्रकाशेनाज्ञानप्रकाशनकथनमत्यन्तासङ्गतम्। अज्ञानान्तरं ब्रह्मस्वरूपतिरोधायकत्वेन न ह्यापाद्यते, येन 'बाधकाभावात्' इति भवदुक्तिस्संगतार्था भवेत्। सिषाधयिषिताज्ञानावाराकत्वेनैवापाद्यते। तदापादनमसमाधेयमेव। यदत्र 'अथवे'त्यादिना "अज्ञानस्य सत्तयैव तिरोधायकत्वाभ्युपगमेपि न दोषः। काचादेरपि मिथ्यात्वात्" इत्युच्यते। तन्निरस्तमेव। नहि काचादेर्मिथ्यात्वं सिद्धम्। नेदं रजतमिति बाधवत् काचादेर्बाधस्य तत्रादर्शनात्। तथाच सत्तया तिरोधायकत्वाभ्युपगमे ज्ञानाबाध्यत्वमव्याहतमेवेति सत्यत्वमेव सिद्ध्येत्। नच—प्रकृतानुमाने नाज्ञानान्तरसिद्धिप्रसङ्गः। प्रमाणज्ञानस्यैव पक्षत्वात्। प्रकृतानुमितिरूपाज्ञानज्ञानं तु न प्रमाणज्ञानम्। साक्षिभास्याज्ञानज्ञानत्वात्—इति वाच्यम्। तथापि तत्रैव साध्याभाववति अज्ञानज्ञाने अप्रकाशितार्थप्रकाशकत्वरूपहेतोस्सत्त्वात् अनैकान्त्यस्य दुष्परिहरत्वात्॥

ननु हेतोः परिष्कृतस्य तत्राभावात् न-व्यभिचारः। परिष्कारश्च, अप्रकाशितार्थगोचरत्वे सति प्रकाशशब्दवाच्यत्वात्, अप्रकाशविरोधि प्रकाशत्वाद्वेति। अज्ञानज्ञाने प्रकाशशब्दवाच्यत्वस्य वा, स्वविषयेऽज्ञानेऽप्रकाशाभावात् अप्रकाशविरोधिप्रकाशत्वस्य वा सत्त्वेपि सत्यन्तघटकाप्रकाशितत्वासंभवेन विशिष्टहेतोरभावात् नानैकान्त्यम्। अप्रकाशितत्त्वं हि प्रकाशपूर्वकालवर्तित्वघटितम्। प्रकाशान्यकालावृत्तित्वेनाज्ञानस्य प्रकाशपूर्वकालवृत्तित्वं न संभवत्येवेति चेन्न। हेत्वप्रसिद्धेः। प्रकाशरूपब्रह्मचैतन्यस्याज्ञानस्य चानादित्वेन भवदभिमतत्वात् त्वदुक्तरीत्यैव प्रकाशप्राक्कालवर्तित्वघटिताप्रकाशितत्वस्याज्ञानेऽसंभवेन प्रमाणज्ञानेऽप्रकाशितार्थप्रकाशकत्वासंभवात्। एवंच भावाज्ञानसाधकतया भवदुपात्तमिदमनुमानं स्वरूपासिद्धमिति फलितम्॥

यदत्र (८८-पु) "अथवा स्वविषयावरणसमयावृत्तित्वे सति तदावरणनिवर्तकत्वमेव हेतुः। ज्ञानद्वारा तदावरणनिवर्तकेन्द्रियादौ व्यभिचारवारणाय सत्यन्तम्। न चायं हेतुः साध्यसिद्धेः प्रागसिद्ध इति वाच्यम्। अनिर्धारितभावाभावरूपस्याज्ञानावरणस्य ज्ञाने सति तन्निवृत्तेश्च प्रागेव सर्वसिद्धत्वात्। भावत्वसिद्धेरेवानुमानाधीनत्वात्। अज्ञानज्ञाने च निरुक्तहेतोः प्रागभावव्यतिरिक्तत्वादिना सत्त्वाभ्युपगमे तद्विषयतूलाज्ञानेन साध्यमपि वर्तत इति न व्यभिचारः।" इत्यादिकमुक्तम्। तदपि न समञ्जसम्। तथाहि-हेतोः स्वरूपासिद्धत्वात् न भवदभिताज्ञानमनुमानमिदं साधयितुमलम्। एतदनुमानात्प्राक् आवरणासिद्धेः। नच एतदनुमानात्प्रागपि सामान्यतः आवरणं सिद्धमिति वाच्यम्। प्रमाणाभावात्। न चाहमज्ञ इत्यादिकमेव प्रमाणमिति वाच्यम्। ज्ञानाभावविषयत्वेन तदन्यथासिद्धेरुक्तत्वात्। बाधितश्च हेतुः, प्रत्यक्षेणाज्ञानस्याभावत्वे निश्चिते तत्र भावत्वं बाधितमिति। अपि चात्र चक्रकापत्तिः श्रुतप्रकाशिकोक्ता दुर्वारैव। तत्र हि, "अहमर्थधर्मभूतप्रकाशोत्तीर्णेन स्वरूपचैतन्येनाज्ञानसिद्धौ अनुमानप्रामाण्यम्। तत्प्रामाण्येन भावरूपाज्ञानसिद्धिः। तत्सिद्धौ ज्ञातुरपि तत्कल्पितत्वात् तदुत्तीर्णसाक्षिचैतन्येनाज्ञानानुभवसिद्धिः" इति चक्रकमापादितम्। न ह्यज्ञानस्यानादितया साक्षिगम्यत्वकथनमात्रेण चक्रकं परिहृतं भवेत। यावत् ज्ञातुः भावरूपाज्ञानकल्पितत्वं न सिद्ध्येत्, न तावत् केवलसाक्षिगम्यत्वमज्ञानस्य सिद्ध्येत्। तथा चानादिसाक्षिगम्यत्वमज्ञानस्य साधनीयम्। तदर्थं ज्ञातुः कल्पितत्वं प्रसाधनीयम्। तदर्थं भावरूपाज्ञानं साधनीयम्। तत्र चेदमनुमानमपेक्षितम्। अनुमाने चाज्ञानस्यानादिसाक्षिगम्यत्वमपेक्षितमिति चक्रकमप्रतीकार्यमेवापतितमिति सिद्धम्। किञ्च — स्वविषयावरणसमयावृत्तित्वं

प्रमाणज्ञाने दुस्सपादमेव। अज्ञानस्य प्रमाणज्ञानरूपनिवर्तकानन्तरकालमेव नाशाभ्युपगमात् तत्पूर्वक्षणे च नाश्यनाशकयोः अज्ञानप्रमाणज्ञानयोः सत्त्वाभ्युपगमावश्यंभावेनाऽऽवरणसमयवृत्तित्वस्यैव सत्त्वात्। अपि च साध्ये स्वविषयावरणस्वनिवर्त्यत्वप्रवेशनात् स्वविषयावरणसमयावृत्तित्वविशिष्ट-तदावरणनिवर्तकत्वरूपहेतोः साध्यदशापन्नतया हेतोः साध्याविशिष्टता च स्यात्। यदिचानेनानुमानेन भावत्वमात्रं सिषाधयिषितं, तदा तन्मात्रसाधनौचित्यात् ईदृशसाध्यपरिष्कारवैफल्यं दुरुद्धरमेव स्यात्॥

यदपि चात्रैव (८८-पु) "आस्तां वाऽज्ञानज्ञाने व्यभिचारः। व्यभिचारिहेतुनापि संयग्ज्ञानजननाविरोधात्" इति। तदिदमत्यन्तोपहास्यम्। सर्वप्रमाणवैयाकुलीप्रसङ्गात्। विशिष्य सदसद्धेतुविभाग-वैयर्थ्याच्च॥

॥ साध्यविशेषणवैयर्थ्यम् ॥

साध्ये च स्वप्रागभावव्यतिरिक्तत्वविशेषणं व्यर्थमेव। वस्त्वन्तरेत्यत्रान्तरपदवैयर्थ्यं चावर्जनीयम्। वस्तुपदं हि भावपदार्थ-मात्रवाचि। किञ्च — स्वनिवर्त्यपदेनैव प्रागभावव्यावृत्तिसिद्धेः स्वप्रागभावव्यतिरिक्तत्वविशेषणवैयर्थ्यं दुर्वारम्॥

यदत्र (८८-८९-पु) "नच स्वनिवर्त्यपदेनैव व्यावृत्तिसिद्धिरिति वाच्यम्। प्रतियोगिस्वरूपा प्रागभावनिवृत्तिरिति मते ज्ञानप्रागभाव-निवृत्तिर्ज्ञानमिति ज्ञाननिवर्त्यत्वासंभवात्। प्रतियोग्यतिरिक्ता प्रागभावनिवृत्तिरिति मते ज्ञानप्रागभावनाशो ज्ञानजन्य इति ज्ञानप्रागभावे स्वनिवर्त्यत्वस्याक्षतत्वेन तमादायार्थान्तरं स्यादिति प्रथमविशेषणं सार्थक"मित्युक्तं—तन्न साधु। प्रागभावनिवृत्तेः प्रतियोग्यतिरेकेऽपि प्रतियोगिप्रागभावयोस्समानकालीनत्वविरोधात्

स्वोत्पत्तिकाल एव प्रागभावनिवृत्त्युत्पत्त्या प्रागभावे स्वनिवर्त्यत्वासंभवात्। तथाच तेनैव प्रागभावव्यावृत्तिसिद्ध्या प्रथमविशेषणवैयर्थ्यमपरिहार्यमेव। किञ्च—स्वप्रागभावस्य स्वविषयावरणत्वाभावेन प्रथमविशेषणवैयर्थ्यं वज्रलेपायितमेव। प्रागभावस्य स्वविषयज्ञानानुकूलतया तत्प्रतिबन्धकत्वाभावात्। नास्त्यादिव्यवहाराप्रयोजकत्वाच्च। अपिच त्वद्वाक्यमत्रानन्वितमपि। पञ्चम्यन्तपदस्यानन्वयात्। न केवलमनन्वितं, विरुद्धमपि साधयति। "ज्ञाननिवर्त्यत्वासंभवात् स्वनिवर्त्यपदेनैव व्यावृत्तिसिद्धिरिति हि साध्यं स्यात्। नतु 'नच वाच्य'मिति। वस्तुतस्तु 'ज्ञाननिवर्त्यत्वासंभवेपि' इति त्वद्वाक्येन भाव्यमिति अनन्वितमेवेदं वाक्यमत्र॥

यच्चात्रैव (८९-पु) "नच स्वाभावव्यतिरिक्तेति निवेशेनैवोपपत्तौ प्राक्पदवैयर्थ्यमिति शंक्यम्—साध्यघटकप्रागभावपदस्य ज्ञानपूर्ववृत्त्यभावार्थकत्वात। पारिभाषिकप्रागभावाबोधकत्वात्। ज्ञानध्वसमादायार्थान्तरस्याप्रसक्तत्वात् प्राक्पदं सार्थकम्" इति—तदसाधु। प्राक्पदवैयर्थ्यशंकाया असमाधेयत्वात्। ज्ञानध्वंसमादायार्थान्तराप्रसक्तिस्तु त्वयैवोक्ता। स्वाभावपदेनैव प्रागभावग्रहणसंभवेन तद्व्यतिरिक्तत्वं प्रागभावे नास्तीति वक्तुं सुशकत्वात्। नहि स्वप्रतियोगिकाभावत्वावच्छिन्न-प्रतियोगिताक-भेदवत्त्वरूप-स्वाभावव्यतिरिक्तत्वं स्वप्रागभावे संभवेत्। घटवति भूतले यत्किञ्चिद्घटाभावसंभवेपि घटवद्भेदस्यासंभवात्। तथाच प्राक्पदमनर्थकमेव। प्रागभावपदस्य प्रतियोगिप्राक्कालीनाभावार्थकतया न तत्र काचित्परिभाषाऽस्ति। अतः पारिभाषिकप्रागभावाबोधकत्वादिति भवदुक्तमसङ्गतमेव॥

यदपि चात्रैव (८९-पु) "अथवा परमते ज्ञानप्रागभावस्य ज्ञानावस्थान्तरत्वाभ्युपगमेन तादृशप्रागभावेनार्थान्तरवारणाय प्रथम-

विशेषणम्। अस्मन्मते च ज्ञानप्रागभावव्यतिरिक्तत्वं चाव्याहतमेव। ज्ञानप्रागभावः ज्ञानशक्त्यवस्थः प्रमातैवेति मते च प्रमातृव्यतिरिक्त-त्वमज्ञानस्य सुसंपादम्" इति। तन्न—एवमपि प्राक्पदवैयर्थ्यतादवस्थ्यात्। उभयमतरीत्यापि अनुमानदोषाच्च। प्रागभावपदेन किं ज्ञानावस्था-विशेषो विवक्ष्यते, उतान्योऽर्थो विवक्ष्यते। आद्ये भवन्मतरीत्या साध्याप्रसिद्धिः। नहि भवन्मते तादृशः प्रागभावशब्दाभिलप्यः ज्ञानावस्थाविशेषोऽभ्युपगम्यते। अन्त्ये च दत्तमुत्तरम्। स्वनिवर्त्य-पदेनैवालमिति प्रथमविशेषणवैयर्थ्यस्यापरिहार्यत्वात्। उक्तरीत्याऽनुमान-स्यानैकान्त्यसाध्याप्रसिद्ध्यादिना दुष्टत्वेन भवदभिमताज्ञानस्यैवासिद्ध्या, "अज्ञानस्य ज्ञानप्रागभावव्यतिरिक्तत्वमस्मन्मतेऽव्याहतम्" इति त्वदुक्तमसङ्गतमेव। "ज्ञानप्रागभावः ज्ञानशक्त्यवस्थः प्रमाते"ति पक्षोपक्षेपः प्रतिक्षेप्य एव। 'ज्ञानप्रागभावः प्रमाता' इतीदमतीवो-पहास्यम्। ज्ञानवन्तं हि लोके प्रमातारं मन्यन्ते प्रामाणिकाः। नहि ज्ञानप्रागभावस्वरूपम्। किञ्च तादृशप्रागभावरूपप्रमातृव्यतिरिक्त-त्वमज्ञानस्य साध्यत इति भवन्मतमतिशोभनम्। अज्ञानं प्रमातृत्वेन को वा स्वाधीनचित्तः आशङ्केत, येनाज्ञानस्य प्रमातृव्यतिरिक्तत्व-साधनमर्थवद्भवेत्। अहो भवतां सर्वत्र वैपरीत्यम्! भवतां मते तमसोपि सहस्रभानुव्यतिरेकः प्रसाधनीय एव भवेत्। किञ्च— प्रमातुः स्वविषयावरणत्वादिविशिष्टवस्तुत्वाभावात् तद्ग्रहणप्रसक्त्य-भावाच्च किमिति तद्व्यतिरेकः इह विवक्ष्यते?॥

स्वविषयावरणेति द्वितीयविशेषणसार्थक्यवर्णनमप्यसाधु, दुष्करं च। घटादिप्रमायां बाधात्। नहि घटादिविषयमज्ञानं प्रसिद्धं भवन्मते। जडस्य प्रकाशाप्रसक्त्याऽऽवरणाप्रसिद्धेः। नच स्वविषया-वच्छिन्नचैतन्यावारकत्वविवक्षणान्न दोष इति वाच्यम्। शाब्दाखण्ड-

ब्रह्मसाक्षात्कारे बाधस्य दुष्परिहरत्वात्। नहि तत्र विषयावच्छिन्न-चैतन्यं प्रसिद्धम्। तस्य पक्षान्तर्भूतत्वे तु तत्रैव व्यभिचारः॥

यत्तु स्वविषयावरणेति द्वितीयविशेषणसार्थक्य स्वोत्पादकादृष्टद्वारकतया वर्णितम्, तत्राप्यावरणपदेनैवालमिति स्वविषयांशवैयर्थ्यम-परिहार्यम्। नच यददृष्टं स्वविषयज्ञानजनकं विषयान्तरज्ञान प्रतिबन्धकतया, तददृष्टविशेषे तद्वारणाय तद्विशेषणम्। समानविषयत्वेन स्वनिवर्त्यत्वोपपादनार्थत्वाच्च तत्सार्थकत्वमिति वाच्यम्। पूर्वोक्तेन व्याघातात्। पूर्वं हि (६१–पु) आवरणत्वं नास्त्यादिव्यवहारयोग्यता-पादकत्वरूपमेवोक्तम्। नतु ज्ञानोत्पत्तिप्रतिबन्धकत्वरूपम्। तदिदं व्याहतभाषिणां भवता युक्तमेव। समानविषयत्वेन स्वनिवर्त्यत्वोप-पादनार्थमपि न तन्निवेशावश्यकता। प्रमाणज्ञानस्य स्वविषयावरण-निवर्तकत्वमेव संभवेत्। न त्वन्यविषयावरणनिवर्तकत्वमिति स्वत एव समानविषयत्वलाभात् न तत् उपपादनीयमिति स्वविषयेति निरर्थकमेव॥

यदिदमुक्तं (८९–पु) "यद्यप्यज्ञाननिवृत्तिरात्मरूपा, तथापि ज्ञानाधीनध्वंसप्रतियोगिताकत्वरूपं ज्ञाननिवर्त्यत्वं तस्याविरुद्ध"मिति। तन्न समञ्जसम्। स्वेनैव कृताया आशंकाया अपरिहृतत्वात्। अज्ञाननिवृत्तिरूपः तद्ध्वंसः आत्मरूपः इत्याशंका। ज्ञानाधीनध्वंस-प्रतियोगित्वरूपं ज्ञाननिवर्त्यत्वमज्ञानस्येति परिहारोक्त्या कः परिहारोऽभि प्रेतः?। आत्मरूपायाः अज्ञाननिवृत्तेः कथं ज्ञानजन्यत्वं घटेत?। आत्मनो नित्यत्वात्। ज्ञानाधीनध्वंसप्रतियोगित्वेऽज्ञानस्य वक्तव्ये "तादृशध्वंसप्रतियोगिताकत्व"मिति भवदुक्तमसमीचीनमेव। न ह्यत्र बहुव्रीहिसमास उपपद्यते। नचात्र बहुव्रीहिरेव विवक्ष्यते। ज्ञानाधीनत्वं न ध्वंसेऽन्वेति। येन अज्ञानध्वंसस्य नित्यात्मरूपत्व-

मनुपपन्नं स्यात्। अपितु तादृशध्वंसप्रतियोगितायामेवान्वेति। तदाश्रयत्वमेव बहुव्रीह्यर्थः। तथाच ज्ञानाधीना या ध्वसप्रतियोगिता, तदाश्रयत्वरूप ज्ञाननिवर्त्यत्वमज्ञानस्योपपन्नमेवेति वाच्यम्। अज्ञानध्वंसस्य ज्ञानाधीनत्वानङ्गीकारे तादृशध्वंसप्रतियोगिताया अपि ज्ञानाधीनत्वानुपपत्तेः। नापि तादृशध्वंसप्रतियोगितानिरूपकत्वमुपपन्नम्। तस्य ध्वंसनिष्ठत्वात्। एवं च प्रमाणज्ञानाधीनस्याज्ञानध्वंसस्य आत्मरूपत्वे ज्ञानाधीनत्वं विरुद्धम्। आत्मरूपत्वाभावेऽद्वैतहानिरिति स्वनिवर्त्यत्वोक्तिरसगतैव। "अनादिभावत्वस्यानिवर्त्यत्वेऽप्रयोजकत्वात्" इत्येतत्तु पूर्वमेव दत्तोत्तरम्। किञ्च—अज्ञानस्य भवदभिमतस्य मिथ्यात्वेऽनादित्वं भावत्वं चानुपपन्नमेव। "वृत्तिज्ञानप्रतिबन्धकादृष्टविशेषेणार्थान्तरवारणाय स्वनिवर्त्येति" इति वर्णनमपि न संगतम्। तस्यादृष्टस्य स्वविषयावरणत्वासंभवेन तत एव व्यावृत्तिसंभवात्। यदि च स्वविषयावरणत्वमपि तस्यादृष्टविशेषस्याङ्गीक्रियते, तदा स्वविषयावरणस्य स्वनिवर्त्यत्वनियमात् नानेनापि विशेषणेन तद्व्यावृत्तिस्स्यात्॥

यदपि चात्रैव (८९-पु) "यद्यपि स्वदेशगतत्वं बाधितम्। शुद्धोपहितान्यतराश्रयस्याज्ञानस्य प्रमाणज्ञानदेशत्वाभावात्। तथापि उपहिताश्रितत्वपक्षे ज्ञानाज्ञानयोरुभयोरप्युपहितचिदाश्रितत्वेन, शुद्धचिदाश्रितत्वपक्षे च तत्तदुपाधिसम्बन्धात् ज्ञानस्याव्याहतमिति ज्ञानाज्ञानयोश्शुद्धचिदाश्रितत्वाच्च" इत्युक्तम्। तदिदमनन्वितमबोधकमसङ्गतं च। अत्र भवद्वाक्ये तृतीयान्तपदस्य, इतिकारस्य, अन्तिमपञ्चम्यन्तपदस्य च कुत्राप्यन्वयो नास्तीत्यनन्वय एवात्र। तत्तदुपाधिसम्बन्धात् किं अव्याहतं ज्ञानस्येति नोक्तम्। स्वदेशगतत्वं चाज्ञानस्यैवोपपादनीयमिति ज्ञानस्येति न घटते। किञ्च—

शुद्धोपहितान्यतराश्रयस्याज्ञानस्य प्रमाणज्ञानदेशत्वाभावात्" इति त्वदुक्त्यैव शुद्धे वा उपहिते वा प्रमाणज्ञान नास्तीति सिद्ध्या, पुनः "ज्ञानाज्ञानयोरुभयोरपि उपहितचिदाश्रितत्वेन" इत्युक्तिः कथमिवानुन्मत्तस्य घटेत ?। अपिच—उपरि अथवेति जीवाश्रितत्वपक्षोपक्षेपदर्शनात् अत्र उपहिताश्रितत्वपक्षः कीदृश इति न जानीमः। शुद्धब्रह्माश्रितत्व जीवाश्रितत्वमित्युभयपक्षोपपादनमेव भवद्भिरपि पूर्वं कृतम्। "ज्ञानाज्ञानयोः शुद्धचिदाश्रितत्वाच्चे"त्येतदपि बाधितमेव, शुद्धचैतन्ये भवन्मते ज्ञानाश्रयत्वस्यासभवात्। तथासति शुद्धत्व न स्यात्। शुद्धे चाज्ञानाश्रयत्व सुतरां न संभवतीति तु आश्रयानुपपत्तिप्रतिपादनप्रकरणे विस्तरेणोक्तमेव। अतः उभयथापि स्वदेशगतत्वमज्ञानस्य भवद्भिर्दुरुपपादमेवेति सिद्धम्॥

यदत्र (८९-९०-पु) "अथवा जीवस्यैव जानामि न जानामीत्यनुभवात् ज्ञानाज्ञानोभयाश्रयत्वम्। अन्तःकरणावच्छिन्नचैतन्याश्रितज्ञानाज्ञानयोः कर्णशष्कुल्यवच्छिन्नाकाशाश्रितस्य शब्दस्याकाशाश्रितत्ववत् चैतन्याश्रितत्वसंभवान्न बाधितं स्वदेशगतत्वम्" इति। तदिदमप्यसारम्। जीवस्याज्ञानाश्रयत्वं नोपपद्येतेति आश्रयानुपपत्तिस्थापनप्रकरणे स्फुटम्। अन्तःकरणावच्छिन्नचैतन्याश्रयत्वमज्ञानस्येति पुत्रो मे पितेतिवदसङ्गतम्। न ह्यज्ञानकार्यभूतान्तःकरणावच्छिन्नचैतन्याश्रितत्वमज्ञानस्य घटते। अपि चाकाशोदाहृतिरपि निर्विशेषवादिनां भवतामनुपपन्नैव। शब्दस्याकाशाश्रितत्वे कर्णशष्कुल्यवच्छेदादिक नापेक्षितम्। तदवच्छिन्नाकाशस्य श्रोत्रत्वमित्येतदेव। किञ्च—नह्याकाशो निर्विशेषः भवदभिमतनिर्विशेषचैतन्यमिव। अत आकाशे शब्दाश्रयत्वमुपपन्नम्। निर्विशेषे तु न तदुपपन्नमिति दृष्टान्तासामञ्जस्यमेव। तथाच स्वदेशगतत्वं दुरुपपादमेव। अन्यच्च— विषयगताज्ञातत्वमादायार्थान्तरवारणायेदं

स्वदेशगतत्वविशेषणमित्यपि न साधु। विषयतासम्बन्धेनाज्ञानस्य विषयगतत्वं भवतैवोच्यते उपरि। ततश्चाज्ञातत्वं विषयतासम्बन्धेना-ज्ञानमिति चेदुच्यते— तर्हि न तेनार्थान्तरताप्रसक्तिः। तस्यैव सिषाधयिषितत्वात्। यदि चाज्ञातत्वमुक्तविधाज्ञानादन्यत्किञ्चित्—तदा तस्य स्वविषयावरणत्वं नास्तीति तेनैव तद्व्यावृत्तिसंभव इत्युभयथापि स्वदेशगतदलप्रयोजनवर्णनमसङ्गतम्। स्वनिवर्त्यत्वोप-पादनार्थमित्यपि वक्तुं न शक्यते। निवर्त्यनिवर्तकयोस्सामानाधि करण्यं विना निवर्त्यनिवर्तकभावो नोपपद्यत इति स्वत एव तत् सिद्ध्यति। न तस्य साध्यघटनमपेक्षितम्। एवं साध्यघटक-दलवैयर्थ्यमपरिहार्यमेव॥

यदत्र (९०-पु) "नचाप्रयोजकत्वम्। ज्ञाननिवर्त्याज्ञानाभावे स्वयंप्रकाशचिद्रूपस्यात्मनस्संसारविपर्यासानुपपत्तेः मुक्तिशास्त्रानारंभः प्रसज्येत" इति अप्रयोजकशङ्कावारणम्, तदप्रयोजकमेव। मायावादिना भवतामेव मतेऽज्ञानं मोक्षशास्त्रप्रयोजकं युक्तं भवेत्। वस्तुतस्तु ज्ञाननिवर्त्यभावाज्ञानाभावेऽपि न मोक्षशास्त्रवैयर्थ्यप्रसङ्गः। "अविद्या कर्मसंज्ञान्या" इत्यादिप्रमाणानुसारेण विद्यानाश्यकर्माभ्युपगमेनैव जीवानां तन्निवृत्तिरूपसंसारविपर्याससंभवात् मोक्षशास्त्रसाफल्यात्। अहमज्ञः न जानामीत्यादीनां तु अन्यविषयत्वेनान्यथासिद्धिः पूर्वमेवोक्ता। अतः प्रत्यक्षमिवानुमानमपि न भवदभिमताज्ञानसाधकमिति सिद्धम्॥

एवं परोक्तभावाज्ञानसाधनानुमानदोषमुद्भाव्य तत्र प्रतिप्रयोगाः प्रदर्शिताः श्रीभाष्यकृद्भिः "विवादाध्यासित"मित्यादिना। तत्र परैरुद्भाविता दोषाभासाः परमार्थभूषणादौ विस्तरेण सुनिपुणं निर्धूताः। तत्र प्रकृते यद्य-त्प्रयोगदूषणमत्र परीक्षाग्रन्थे क्रियते,तत्तत्प्रयोगविषये वक्तव्यमुपपादयामः।

तत्र प्रथमः प्रयोगः—विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयं, अज्ञानत्वात्। ज्ञात्राश्रयं हि तत्—इति। द्वितीयः—विवादाध्यासितमज्ञानं न ज्ञानावरणम्, अज्ञानत्वात्। शुक्तिकाद्यज्ञानवत्। विषयावरणं हि तत्—इति। शुक्तिकाद्यज्ञानं हि शुक्तिकादिज्ञेयावरणं सत् ज्ञात्राश्रितं दृश्यते। प्रकृते ब्रह्मणोऽज्ञेयत्वात्, ज्ञातृस्वभावाच्च नाज्ञानाश्रयत्वं वा तद्विषयत्वं वा स्यात्॥

यदत्र (९०-पु) "तदपि न—अनुकूलतर्काभावेन आत्माज्ञानानुभवप्रतितर्कपराहतत्वात्। सिद्धान्त्यभिमतहेतोश्चानुकूलतर्कसत्त्वेन प्रकृतसाध्यव्याप्यत्वे निश्चितेऽप्रयोजकत्वादीनामनवकाशात्। शुक्त्यज्ञानस्य शुक्तिज्ञानाभावरूपत्वाङ्गीकारे ज्ञानाश्रयत्वं तस्य न स्यादिति घटेत। न तथाऽङ्गीक्रियते। किन्तु भावाज्ञानरूपत्वम्। तस्य च शुक्त्यवच्छिन्नप्रकाशाश्रयविषयकतयाऽभ्युपगमात् दृष्टान्ते साध्यवैकल्यमपि" इत्यादिकमुक्तम्। तत्रोच्यते। प्रथमप्रयोगेऽनुकूलतर्कः—यदि ज्ञानमात्रब्रह्माश्रितं स्यात्, तर्ह्यज्ञानमेव तन्न भवेत्। प्रकाशमात्रस्वरूपेऽज्ञानानुपपत्तेः। नहि ज्ञानेऽज्ञानं स्यात्। यथा ज्ञाने ज्ञानं नास्तीत्युच्यते तथैवाज्ञानमपि न स्यात् इति। आत्माज्ञानानुभवप्रतितर्कोऽपि दुस्स्थ एव। आत्माज्ञानानुभवस्य प्रकरणानुसारेण ज्ञानाभावादिविषयकतयाऽन्यथासिद्धेरुक्तत्वात्। सिद्धान्त्यभिमतहेतोरनुकूलतर्कश्च भावाज्ञानाभावे मोक्षशास्त्रवैयर्थ्यप्रसङ्गरूपः पूर्वोक्तः प्रामाणिककर्माभ्युपगमेनैव तच्छास्त्रसाफल्यसंभवोपपादनेन सुदूरनिरस्तः। एवं चानुकूलतर्कोपबृंहितेन प्रतिप्रयोगेण त्वदनुकूलतर्कपराहत्या च भावाज्ञानानुमानस्य दुष्टत्वात् न भवदभिमताज्ञानसिद्धिः। द्वितीयप्रयोगे च—यदि ज्ञानमात्रावारकत्वाभावमनङ्गीकृत्याऽज्ञानत्वपरमभ्युपगम्यते—तदा लोके भ्रमस्थले कुत्राप्यज्ञानं न सिद्ध्येदित्यनु-

कूलतर्कः। इदं रजतमिति भ्रमे हि धर्मिणोपि भासमानत्वात् न तदवच्छिन्नचैतन्यावरणं संभवेत्। तद्धर्मभूतशुक्तित्वं तु न ज्ञायते। ततस्तदेवावृतमित्यवश्यमङ्गीकार्यम्। यद्यत्र शुक्तित्वरूपविषयावरण-मनङ्गीकृत्य चैतन्यमात्रावरणमुररीक्रियेत—तदा धर्मिभानमपि न स्यात्। नहि धर्मावच्छिन्नचैतन्यमन्यत्, धर्म्यवच्छिन्नचैतन्यमन्यदिति भवन्मतम्। परिभाषाया, "वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन भ्रमत्वस्वीकारात्" इति ह्युक्तम्। तथा च शुक्तित्वधर्मरूपविषयावारकत्वं तद्भ्रमोपपादनायावश्यमङ्गीकार्यमिति अज्ञानत्वात् न ज्ञानमात्रावारकत्वं, अपितु विषयावारकत्वमपि सिद्ध्येदिति फलति। प्रकृते ब्रह्म तु न विषय इति भवदभिमानात् न तदावारकाज्ञानसिद्धिरिति तात्पर्यम्। एतेन "किन्तु भावाज्ञानरूपत्वम्। तस्य च शुक्त्यवच्छिन्नप्रकाशाश्रयविषथकतयाऽभ्युपगमात् दृष्टान्ते साध्यवैकल्यमपि" इत्यादिकं परास्तम्। नहि शुक्त्यज्ञाने ज्ञानमात्र-ब्रह्माश्रितत्वाभावरूपं वा ज्ञानमात्रब्रह्मावरणत्वाभावरूपं वा साध्यं नास्ति। अपि त्वस्त्येवेति न साध्यवैकल्यं प्रथमद्वितीययोरुभयोरपि प्रयोगयोः। "शुक्त्यज्ञानस्य तज्ज्ञानाभावरूपत्वाङ्गीकारे ज्ञानाश्रयत्वं तस्य न स्यादिति घटेत" इत्यप्यसंगतं भवन्मते। शुक्तिज्ञानाभावस्य ज्ञानाश्रितत्वसंभवात्। नहि भवन्मते ज्ञाने ज्ञानमङ्गीक्रियते॥

यदत्र (९१-पु) "यद्यज्ञानं ज्ञानाश्रयविषयं न स्यात्, अज्ञानमेव तन्न स्यात्। एवं च ज्ञानमात्रावारकस्याप्यज्ञानस्य ज्ञाननिवर्त्यत्वं नासङ्गतम्। ज्ञानप्रमाणवृत्तिविषयत्वाभ्युपगमात्" इति। तदपि न सङ्गतम्। ज्ञानमात्राश्रयविषयत्वाभावस्यैव साध्यत्वात्। किञ्च—पूर्वोक्तरीत्या शुक्तित्वाज्ञानस्य ज्ञानाश्रयविषयत्वाभावेपि अज्ञानत्वं दृश्यत इति भवदुक्ततर्कपराहतिस्सिद्धा। ज्ञानमात्रावारकस्य

अज्ञानस्य लोके शुक्तिरूप्यादावदर्शनमुपपादितमेवेति तस्य ज्ञाननिवर्त्यत्व-कथनमसंगतमेव। नहि शुक्तिरूप्यादौ ज्ञानावरणमज्ञानम्। शुक्तित्वविषयावरणं हि तत्राज्ञानम्। अपिच—शुक्त्यज्ञानं किं चैतन्य-मात्रावारकं, उत शुक्त्यवच्छिन्नतदावारकम्?। आद्ये—तदज्ञानस्य कथं शुक्तिज्ञाननिवर्त्यत्वम्?। अन्त्ये च—अज्ञानस्य ज्ञानमात्रा-वारकत्वाभावस्सिद्ध एवेति निरुक्तप्रयोगः सुस्थ एव॥

यदपि चात्रैव (९१-पु) "अत एवाज्ञानाश्रयत्वात् ब्रह्मणो ज्ञातृत्वादिप्रसङ्गः प्रत्युक्तः,अप्रयोजकत्वात्। सिद्धान्ते अहङ्कारादिसम्बन्धेनैव ब्रह्मणो ज्ञातृत्व स्वीक्रियते। नतु साक्षादज्ञानमात्रसम्बन्धेन। तस्य ज्ञातृत्वानुपाधित्वात्" इति। तदयुक्तम्। यदि ब्रह्मणो ज्ञानाश्रयत्वं नाङ्गीक्रियते, तर्ह्यज्ञानाश्रयत्वमपि न स्यादेव। तथा सति अप्रसक्त-प्रतिषेधप्रसङ्गात्। देवदत्तो न जानाति, देवदत्तो जानातीत्युभय-विधानुभवानुरोधेन ज्ञानाज्ञानयोस्सामानाधिकरण्यमबाधितं ज्ञातारमेवा-ज्ञानाश्रयमवगमयति। अतो ज्ञानाभावेऽज्ञानमप्यप्रसक्तमेव स्यादिति नाप्रयोजकत्वम्। "निरवद्यं निरञ्जनम्", "यस्सर्वज्ञस्सर्ववित्", "परास्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रिया च", "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥" इत्यादिश्रुतिस्मृत्यादिसर्वप्रमाणानुगुणतया निरस्त-निखिलदोषस्य सर्वकल्याणगुणाकरस्य भगवतः परमपुरुषस्य श्रीमतो नारायणस्य परस्य ब्रह्मणः, "ज्ञानाश्रयत्वं न साक्षादज्ञानमात्र-सम्बन्धात्। अपितु अहङ्कारादिसम्बन्धेनैव ज्ञातृत्वं स्वीक्रियते" इति, अज्ञानदोषैकावलम्बिनां वस्सिद्धान्तोऽतिरमणीय एव॥

"स्वाज्ञानं ये न जानन्ति तत्पश्यन्ति परत्र ते।
निरस्तनिखिलावद्यसर्वकल्याणधामनि॥"

एतेन—“अत एव ज्ञाननिवर्त्याज्ञानविषयत्वे ज्ञेयत्वप्रसङ्गो ब्रह्मणः प्रत्युक्तः। अप्रयोजकत्वात्। अज्ञानाविषयाधिष्ठानज्ञान-निवर्त्यत्वस्याज्ञाने प्रागुपपादितत्वाच्च। ब्रह्मणः प्रमाणवृत्तिविषयत्वस्या-सकृदुक्तत्वाच्च” इति परास्तम्। ज्ञानं स्वसमानविषयाश्रयमेवाज्ञानं निवर्तयतीति तावत्सर्वलोकप्रसिद्धम्। अन्यथा देवदत्तीयघटज्ञानेन तदीयपटाज्ञानस्य, देवदत्तपटज्ञानेन यज्ञदत्तपटाज्ञानस्य च निवृत्ति-प्रसङ्गात्। इत्थं च ब्रह्मविषयाज्ञानस्य ज्ञानेन निवर्तनीयत्वं निवर्तकज्ञानस्य ब्रह्माविषयकत्वेऽनुपपन्नमेवेति ब्रह्मणो ज्ञेयत्वमनिवार्यमेवेति नाप्रयोजकत्वम्। अधिष्ठानज्ञानमात्रादज्ञाननिवृत्तिकथनं तु दृष्टविरुद्धत्वात् उपेक्ष्यम्। नहि शुक्तिव्यक्तिरूपाधिष्ठानज्ञानमात्रात् शुक्त्यज्ञानं निवर्तते। एतेन सविशेषत्वमपि ब्रह्मणस्सिद्ध्यति। अतो ज्ञाना-ज्ञानयोरुभयोरपि ब्रह्मविषयत्व एव निवर्त्यनिवर्तकभाव उपपद्येतेति ब्रह्मणो ज्ञेयत्वमनिवार्यमेव। ब्रह्मणः प्रमाणवृत्तिविषयत्वमात्रेण न निवर्तकत्व स्यात् स्वरूपप्रमाणज्ञानयोर्विषयवैषम्यानङ्गीकारे इति तु सुनिपुणमुपपादितमेव पुरस्तात्। एवं श्रीभाष्यप्रदर्शिताऽऽद्यप्रतिप्रयोगद्वय-सौष्ठवं सुप्रतिष्ठितम्॥

“विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात्। भवदभिमताज्ञानसाधनप्रमाणज्ञानवत्। ज्ञानं न वस्तुनो विनाशकं, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्। यत् वस्तुनो विनाशकं, तत् शक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टम्। यथा ईश्वरयोगिप्रभृतिज्ञानम्। यथा च मुद्गरादि” इति श्रीभाष्यप्रदर्शितसप्तमाष्टमप्रतिप्रयोगद्वये प्रथममधिकृत्य—

यदत्र (९१-पु) “तत्तुच्छम्। आद्ये—सिद्ध्यसिद्धिभ्या व्याघातापत्तेः। अभावरूपसाध्यप्रतियोगिसिद्धौ बाधः। असिद्धौ

प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति" इत्यादि। तदपेशलम्। भवदभिमतसिद्धान्तवाक्यानां सर्वेषामेव तुल्ययोगक्षेमत्वात्। अत्रैव "तत्तुच्छ"मिति त्वद्वाक्ये तच्छब्दार्थः प्रसिद्धो वा न वा?। आद्ये—तुच्छत्वमनुपपन्नम्। द्वितीयेपि तथैव। उद्देश्याप्रसिद्धौ विधेय नान्वेति हि। अतः पराभिमतार्थानुवादपूर्वक तन्निषेधे न कोपि दोषः। नचैवं सत्यपि उक्तप्रतिप्रयोगे दृष्टान्ते साध्यवैकल्यम्। अस्मदभिमताज्ञानसाधकानुमानस्यापि स्वप्रागभावव्यतिरिक्तस्वविषयी-भूताज्ञानपूर्वकत्वादिति वाच्यम्। अज्ञानसाधकतया भवदभिमतानुमानेन सिषाधयिषिताज्ञानस्याज्ञानान्तरेणावृतत्वेन ब्रह्मचैतन्येनाननुभूतस्याकार्य-करत्वेनाज्ञानकल्पनावैयर्थ्यप्रसङ्गादिकस्य पूर्वमेवोक्तत्वात्। न चैवमपि धारावाहिकद्वितीयादिज्ञानसाधारणाबाधितज्ञानत्वादिरूपपक्षतावच्छेदका-भिमाने तादृशद्वितीयादिज्ञाने तादृशाज्ञानपूर्वकत्वाभावरूपसाध्यस्य सिद्धत्वेन सिद्धसाधनदोष इति वाच्यम्। धारावाहिकेषु आद्यज्ञानस्यैव पक्षत्वविवक्षणात्, द्वितीयादिज्ञानाना च सपक्षत्वविवक्षणाच्चादोषात्। उक्तं हि श्रुतप्रकाशिकायां "यद्वा अनुमानमेवेदम्। धारावाहिकज्ञानेषु प्रथमस्य पक्षत्वम्। उत्तरोत्तरज्ञानाना सपक्षत्वमपि ह्युपपद्यते" इति। तदनुगुणतया पक्षतावच्छेदकपरिष्कारसंभवात्। नच — दृष्टान्ते साधनवैकल्यम्। अस्मदभिमताज्ञानानुमितेरनधिगतत्वाबाधितत्वयोर-संभवात्। अज्ञातसत्ताया हि अनधिगतत्वाबाधितत्वे विवक्षिते। अज्ञाने चाज्ञातत्वं नास्ति। नित्यसिद्धसाक्षिसिद्धत्वात्-इति वाच्यम्। भवदीयाज्ञानानुमानदोषपर्यवसानात्। भावाज्ञानानुमाने पक्षवाचक-प्रमाणपदेन किं शुक्तितत्त्वज्ञानादिकमपि विवक्ष्यते, उत ब्रह्मतरज्ञान-मात्रम्। आद्ये-अबाधितत्वमनुपपन्नमिति पक्षत्वबाधः। अन्त्ये च अप्रकाशितार्थप्रकाशकत्वं नित्यं स्वयप्रकाशे ब्रह्मणि नोपपद्यत इति स्वरूपासिद्धिः। किञ्च-'अज्ञातसत्तायाः अनधिगतत्वाबाधितत्वे'

इत्यप्यसङ्गतम्। ज्ञातसत्ताया: बाधितत्वप्रसङ्गात्। नहि तथा लोकेऽनुभूयते। किञ्च साक्षिभास्यस्याज्ञानस्याभावरूपतयैव भानात् तत्र भावत्वसाधक भवदीयमनुमानं बाधितमेव भवेत्॥

यदपि चोक्त (९२-पु) "ज्ञान न वस्तुविनाशकमित्यत्र पृच्छामः। अस्मदादिज्ञानावृत्ति ईश्वरादिज्ञानमात्रवर्ति वस्तुविनाशकत्वप्रयोजकं शक्तिविशेषोपबृंहणं नाम कि?। शक्तेः कार्योन्नेयत्वात् तद्विशेषाभावस्य अस्मदादिज्ञानेषु निश्चेतुमशक्यत्वात्। ईश्वरज्ञाने च सहकार्याधेयशक्तिविशेषाभ्युपगमे नित्यसर्वज्ञत्वव्याघातापत्तेः। नापि भावनोपचयजन्यत्वं तत्। ईश्वरज्ञानस्य नित्यत्वभङ्गप्रसङ्गात्। योगिज्ञानस्य योगजधर्मोपचितत्वमिवेश्वरज्ञानस्य धर्मोपचितत्वं तदिति चेत्— तर्हीदमेवास्मदादिज्ञानस्यापि शक्तिविशेषोपबृंहणमिति हेतोरसिद्धिः। निवर्त्यसहभावित्वं चोपाधिः। आलोकतमसोरिव ज्ञानाज्ञानयोर्विरोधस्य सर्वसिद्धत्वेन बाधश्चे"ति—तत्र ब्रूमः। शक्तेः कार्योन्नेयत्वादेवास्मदादिज्ञानेषु शक्तिविशेषाभावः उन्नीयते वस्तुविनाशरूपकार्यविशेषानुपलब्धेरेव। ईश्वरज्ञाने सहकार्याधेयशक्तिविरहेऽपि तादृशसहजशक्तिसद्भावस्य प्रामाणिकत्वेन तस्या नित्यसत्त्वेपीच्छायामेव कार्योत्पादनेन नित्यकार्योत्पादनप्रसङ्गाभावेन च नित्यसर्वज्ञत्वस्य न कापि व्याहतिः। सर्वज्ञत्वं नाम सर्ववस्तुसम्बन्धः ज्ञानस्य। इच्छानुगुणशक्तिविशेषोपबृंहितज्ञानस्य वस्तुनाशकत्वमिति कोयं विरोधोऽनयोः। ईश्वरज्ञानस्य योगजधर्मोपचितयोगिज्ञानसादृश्यविकल्पनमतीवोपहास्यम्। योगिनामिव तपस्संपाद्यस्य वा अन्यादृशस्य वा धर्मस्य ईश्वरे अप्रामाणिकत्वात्। एतेन— 'हेतोरसिद्धिः' इति त्वदीयं वचनमसिद्धार्थम्। न हीश्वरज्ञाननिष्ठं पूर्वोक्तसहजशक्तिसहकृतत्वमस्मदादिज्ञानेऽस्ति। येनासिद्धिशङ्का प्राप्तावसरा स्यात्।

"निवर्त्यसहभावित्वमुपाधि"रिति चानिरूपकवाक्यम्। पक्षान्तर्भावेन साधनाव्यापकत्वाभावात्। किं नाम निवर्त्यसहभावित्वम्?। किं निवर्त्यवस्तु-सामानाधिकरण्य? उत निवर्त्यसाजात्यं (अ तर्भूतत्वं) आहोस्विदन्यद्वा किञ्चित्। नाद्यः-वस्तुविनाशकत्वाभाववति अस्मदादिज्ञाने निवर्त्यघट-पटादिवस्तुसामानाधिकरण्यस्य निरूपयितुमशक्यत्वात् साध्याव्यापकत्वात्। न द्वितीयः—चरमसाक्षात्काररूपे पक्षेऽपि निवर्त्यसाजात्यरूपो-पाधेस्सत्त्वेन साधनाव्यापकत्वाभावात्। चरमसाक्षात्कारस्यापि निवर्त्यत्वस्य भवद्भिरङ्गीकारात्। न तृतीयः-निरूपयितुमशक्यत्वात्। "आलोक-तमसोरिव ज्ञानाज्ञानयोर्विरोधस्य प्रसिद्धत्वात् बाधः" इत्येतदपि बाधितार्थमेव। ज्ञानेनाज्ञाननिवृत्तिरित्यादौ अज्ञानपदेन ज्ञानाभाव-विवक्षणात् तत्र ज्ञानस्य वस्तुविनाशकत्व नास्ति। वस्तुतस्तु भावान्तरा भाववादिनामस्माक मते सर्वस्यापि भावरूपत्वेपि कुत्रापि न ज्ञानेन वस्तुनाशोऽङ्गीक्रियते। विरोधस्तु प्रवृत्तिद्वारैवेति पुरस्तादेव निरवशेषं निरूपितम्। अत एव "ज्ञानाज्ञानयोर्विरोधस्तेजस्तिमिरयोरिव" इत्येतदसङ्गतम्। विषयविशेषाधीनप्रवृत्त्यादिद्वारैव सर्वत्र विरोधदर्शनात्। अतोऽस्मदादिज्ञाने वस्तुविनाशकत्वाभावरूपसाध्यसिद्धेर्निष्प्रत्यूहतया न बाधादिप्रसङ्गः॥

यदप्यत्रैव (९२-पु) "ज्ञानं न वस्तुविनाशकमित्याद्यनुमानेन ज्ञाननाश्यमज्ञानमवस्त्विति विवक्षितम्। उताज्ञानस्य वस्तुत्वात् ज्ञानं तदनिवर्तकमिति" इत्यादि-तन्न। विकल्पद्वयस्यापि असङ्गतत्वात्। भवदभिमताज्ञानस्याप्रसिद्ध्या तस्य ज्ञाननाश्यत्वादिविकल्पस्यैवासंभवात्। लोके ज्ञानस्य कुत्रापि वस्तुनाशकत्वं न दृश्यत इति, त्वदभिमताज्ञानं चेद्वस्तु, तदा तस्य ज्ञानानिवर्त्यतयाऽनिर्मोक्षप्रसङ्गो दुरुद्धर एवेति भावः। "भवन्मतेपि ज्ञानप्रागवस्थारूपवस्तुविनाशकत्वात् ज्ञानस्य" इति

भवद्वचन वचनीयमेव। अवस्थाया वस्तुत्वायोगात्। अवस्थाविशिष्टं हि वस्तु। वस्तूना तु ज्ञानेन विनाशो नाङ्गीक्रियते न दृश्यते चेति सर्वं सुस्थम्॥

यच्चोक्तं (९२–पु) "अत एवाज्ञानं न ज्ञानमात्रनिवर्त्यं, भावरूपत्वात्, घटादिवदिति परास्तम्। त्वदभिमतकर्मरूपाज्ञानस्यापि भावरूपत्वेन ज्ञानमात्रनिवर्त्यत्वात्। भ्रममूलभयादौ व्यभिचाराच्च। भ्रममूलभयादिकं हि बाधकतत्त्वज्ञानमात्रनाश्यम्। अप्रयोजकत्वमपि हेतोः। भयादिकं न क्षणिकं, तथात्वे कारणं विना नाशे वैनाशिकमतप्रवेशः। तेषा भयादीनामहङ्कारपरिणामभूतानां यावद्विरोधिपरिणामान्तरोदयमनुवृत्तिसंभवेन क्षणिकत्वे मानाभावात्" इति। तदतिस्थवीयः। न हि वयं भवदभिमताविधेयचरमसाक्षात्काररूपज्ञानमात्रेणेव ज्ञानेन कर्मनाशमङ्गीकुर्मः। येनेयमाशङ्का जीवेत्। परं तु परमपुरुषसमाराधनरूपाहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपस्य तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपस्य प्रीतिरूपापन्नस्य वेदनध्यानभक्त्यादिशब्दवाच्यस्य अहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याप्रयाणादनुवर्तमानस्य दर्शनसमानाकारस्य ज्ञानविशेषस्यैव ब्रह्मप्राप्तिविरोधिसर्वकर्मविनाशकत्वमभ्युपगच्छामः। तादृशोपासनविरोधिकर्मनाशस्तु अनभिसंहितफलेनानुष्ठितेन कर्मणैवेति तु तत्त्वम्। भयादौ च न व्यभिचारः। ज्ञानानाश्यत्वात्, क्षणिकत्वाच्च। न तावता अहेतुककार्योत्पत्तिप्रसङ्गः। समवायिकारणनाशाद्यनाश्यक्षणिकफलविनाश्यमित्येवाङ्गीकारात्। भयादीनामहङ्कारपरिणामभूतत्वोक्तिरुपहास्या। ज्ञानपरिणामभूतत्वस्यैव प्रामाणिकत्वात्। तदिदं न्यायसिद्धाञ्जनादौ सुनिपुणं निरूपितमाचार्यसार्वभौमैरिति तत्रैव द्रष्टव्यम्। भयादीना क्षणिकत्वे प्रमाणं तु श्रीभाष्य एव प्रदर्शितम्।

रज्जुसर्पभ्रमादिना भयादिकमुत्पद्यते। ज्ञानवत् कारणसंनिधानतन्निवृत्त्यनुविधायिसद्भावासद्भावतया भयादेः क्षणिकत्वमिति च निश्चीयते। यदि भयादीनामक्षणिकत्वं, तदा भ्रमज्ञानस्य सन्तन्यमानतया प्रतिभ्रान्तिज्ञानं भयजननेन युगपदनेकभयोपलब्धिप्रसङ्गस्स्यात्। नच— एकेनैव ज्ञानेन भयमेकमेवोत्पन्नम्। तेनैव ज्ञानसन्तत्या भयान्तरोत्पत्तिः प्रतिबध्यते। नहि दण्डचक्रादिहेतुसामर्थ्यात् तस्यामेव मृदि घटसन्तानोत्पत्तिर्दृष्टा। तस्मादक्षणिका एव भयादय इति वाच्यम्। एकज्ञानेनोत्पन्नस्य भयस्य ज्ञानान्तरोत्पाद्यमानभयान्तरप्रतिबन्धकत्वाभ्युपगमे एकसामग्र्योत्पन्नस्य घटस्य मृदन्तरघटितसामग्र्यन्तरोत्पाद्यमानघटान्तरप्रतिबन्धकत्वापत्त्या जगत एव एकघटत्वापत्तेः। तस्मात्सामग्र्यन्तरेण कार्यान्तरमुत्पद्येतैव। न पूर्वोत्पन्नकार्येण प्रतिबन्धसंभवः। प्रकृते च घटादिवत् भयादेरनेकस्य युगपदनुपलंभेन क्षणिकत्वमेवैष्टव्यमिति श्रुतप्रकाशिकादिषु सम्यङ्निरूपितम्॥

"वस्तुतः दुःखभयादयोपि ज्ञानविशेषा एवेति क्षणिकतया स्वयमेव नश्यन्ति" इति श्रुतप्रकाशिकोक्तं प्रति यदुक्तं,— (९३-पु) "तदिदं भ्रान्तिमूलम्। 'कामस्सङ्कल्प' इत्यादिश्रुतौ प्रभृत्यर्थकेतिपदेन सुखदुःखादिपरिणाममुक्त्वा पृथगेव ज्ञानपरिणामप्रतिपादनात्। निर्विषयत्वसविषयत्वाभ्यां दुःखादीनां ज्ञानस्य च वैलक्षण्योपलंभाच्च" इति, तदेतत् अज्ञवचनमेव। "कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतौ प्रभृत्यर्थकेतिपदेन सुखग्रहणेपि, आत्मधर्मभूतज्ञानस्यापि धीशब्देनोपात्तत्वेन कामादीनां सर्वेषामेव ज्ञानसहपाठात् ज्ञानपरिणामत्वस्यैव सिद्धेः। ज्ञानपरिणामः पृथङ्नोच्यतेऽत्र। अत्र हि श्रुतिप्रकरणे ज्ञानोपकरणेषु मनःप्राधान्यमेव प्रतिपाद्यते। कामादिज्ञानपरिणामेषु सर्वेष्वपि मनःकरणकत्वमिति

प्रकरणतात्पर्यम्। इदं च स्पष्टं वेदार्थसंग्रह–श्रीभाष्य–न्यायसिद्धाञ्जनादिषु। "सविषयत्वतदभावाभ्या ज्ञानदुःखयो"रित्येतत्तु भ्रान्तवचः। सुख-दुःखादीनामपि ज्ञानस्येव सविषयत्वस्यानुभवसिद्धत्वात्। उक्तं हि वेदार्थसंग्रहे, "विषयायत्तत्वात् ज्ञानस्य सुखरूपतायाः" इति। एवं न्यायसिद्धाञ्जनेपि, "वैषयिकसुखरूपत्वं ज्ञानस्य विषयाधीनम्" इत्युक्तम्। नहि केनापि लोके सुखं वा दुःखं वा निर्विषयं किञ्चिदनुभूयते॥

यदप्युक्तं (९३–पु) "ज्ञानत्वेपि दुःखादेः क्षणिकत्वं कथं तस्य। किं स्वेनैव स्वनाशोऽनुभूयते, उत तदनुमितेन क्षणिकत्वेन?। आद्ये—अन्वयदृष्टान्तासंभवः। अस्मदभिमताखण्डब्रह्माकारवृत्तिज्ञान-स्याप्यज्ञाननाशादेव नाश्यत्वमनुभूयते, नतु स्वयमेव नाश्यत्वम्। व्यतिरेकदृष्टान्तोपि न संभवति। ज्ञाने व्यभिचारापत्तेः। न द्वितीयः—फलनाश्ये कर्मणि व्यभिचारात्" इति। तदसङ्गतम्। स्वोक्तिव्याहत च। सुखमनुभवतीत्यादिव्यवहारानुगुण्येनानुभवार्थ-प्रसिद्धानुभूयतेपदप्रयोगोऽत्रासङ्गतः। यद्यत्रानुभूयते इत्यस्य प्राप्यते इत्यर्थ इत्युच्यते—तदापि तदनुमितेन क्षणिकत्वेन नाशः प्राप्यत इत्युपरितनविकल्पस्सुतरामसङ्गत एव। तदनुमितेनेत्यत्र तच्छब्दार्थः कः?। भयादिकं तन्नाशो वा?। उभयत्रापि तदनुमितत्वं क्षणिकत्वस्यासभवि। तादृशेन क्षणिकत्वेन स्वनाशप्राप्तिरिति तु उन्मत्तप्रलपितमेव भवेत्। भयादेर्नाशः क्षणिकत्वेनेति कोपि न ब्रूयात्। अतो विकल्पद्वयमप्य-नभ्युपगमपराहतम्। ततस्तद्दूषणप्रयासो व्यर्थ एव। "एवं च तत्त्वज्ञानेन स्वव्यतिरिक्तं सकलं प्रथमं नश्यति। तत्त्वज्ञानस्य पश्चान्नाशः इति क्रमो नाभ्युपेयते। किंतु तत्त्वज्ञानेन स्वव्यतिरिक्ता-ज्ञानादिनाशकाल एव स्वस्यापि नाश इति स्वीक्रियते" इति

पञ्चोत्तरशततमे (१०५) पुटे भवदुक्तिविरुद्धतया, अत्र, "अखण्डाकारवृत्तिज्ञानस्याप्यज्ञाननाशादेव नाश्यत्वमनुभूयते" इत्युच्यते व्याहतभाषणैकरसिकेन भवता। न ह्यज्ञाननाशकाले एव नश्यतो ज्ञानस्य नाशः अज्ञाननाशहेतुको भवितुमर्हति। उभयोरपि नाशयोस्समकालोत्पत्तिकत्वाभ्युपगमात् भवद्भिः॥

यदप्यत्रैव (९३-पु) "एतेन ज्ञानत्वेन साक्षात् ज्ञाननिवर्त्यत्वाभावस्साध्यते। भ्रममूलस्यापि दुःखादेः भ्रमनिवृत्तिद्वारा तन्निवर्त्यत्वान्नानैकान्त्यमिति परास्तम्। भ्रम एव तन्निवर्त्ये व्यभिचारात्। तस्मात् तान्त्रिकानुमानानि परस्परविरोधीन्यनुपपन्नानीति भावाज्ञानानुमानं निर्दुष्टमिति सिद्धम्। एवं नवीनानामपि भावाज्ञानसाधकानुमानान्तराणि सन्ति" इति। तदिदं, औपनिषदपरमसिद्धान्तप्रकाशकश्रीमन्नारायणपरदेवतामुखारविन्दमकरन्दनिष्यन्दायमान - पाञ्चरात्रप्रद्वेषैकपरायणेन, परमवैदिकश्रीमद्रामानुजमुनीन्द्रसिद्धान्तदूषणैकजीविना, अन्ततस्स्वतन्त्रकाराशयविरुद्धभाषिणा शास्त्रिणोक्तमिति सुतरामुपेक्षणीयमात्महितपरैर्वैदिकसार्वभौमैः। भयादेः साक्षाद्वा परम्परया वा न ज्ञाननिवर्त्यत्वमित्युपपादितमेव पुरस्तात्। भ्रमात्मकस्य ज्ञानस्य सत्यत्वेन न तस्यापि ज्ञानेन निवृत्तिः। किन्तु दोषनिवृत्त्या स्वयं नश्यति। सामग्रीसमवधानासमवधानाधीनोत्पत्तिविनाशवन्तो ज्ञानादय इति सर्वानुभवसिद्धमेव। अतः श्रीभाष्यकारोपात्ताः प्रतिप्रयोगाः सुस्था एवेति पराभिमतभावाज्ञानानुमानस्य दुष्टत्वात् न पराभिमतसिद्धिः। यानि तु नवीनोक्तान्यनुमानानि "जन्य सविकल्पाजन्यचाक्षुषे"त्यादीनि, तानि सर्वाण्यपि सद्विद्याविजय,-वेदान्तविजय,-मङ्गलदीपिका-परमार्थभूषणादिषु विशेषतो दूषितानीति न जीवन्तीदानीमिति विजानन्तु॥

यद्पि (९३-९४-पु) एकाज्ञानवादस्यानुपपन्नत्वेन प्रतिविषय-मनेकाज्ञानभेदाः कल्पनीयाः। तथा च तेषां विषयनियमाभावात् जातेपि प्रमाणज्ञानेऽज्ञानान्तरावृतत्वेन विषयप्रकाशो न स्यादित्यनुयोगे- "ब्रह्मणि विषयेषु चानेकाज्ञानभेदे सत्यपि तेष्वज्ञानेषु किञ्चिदेवाज्ञानं प्रतिविषयं स्वभावादेव कदाचित् किञ्चिदेव वस्तु आवृणोति। तदैव 'न जानामि घट'मिति व्यवहारः। अन्यानि च सुषुप्ताविव निर्विषयाण्युपगम्यन्ते। तथाच घटज्ञानेनाज्ञानविशेषनाशेपि प्रपञ्च-भ्रमोपादानभूतमूलाज्ञानादिनाशाभावात् नानुपपत्तिः। तयोस्समान-विषयकत्वाभावात्। समानविषयकयोर्हि तयोर्निवर्त्यनिवर्तकभावः। तच्च उपाध्यविषयकत्वे सत्युपहितविषयकत्वम्। प्रपञ्चभ्रमोपादानाज्ञानं तु श्रवणादिकारणविशेषजन्यद्वैताभावोपलक्षितब्रह्मात्मतत्त्वज्ञानेन निवर्तत एव। तदनन्तर तत्सत्त्वे प्रमाणाभावात्" इत्याद्युक्तम्। तत्रोच्यते। ब्रह्मणीव विषयेष्वज्ञानाभ्युपगमोऽपसिद्धान्तः। जडेष्वावरणाज्ञानं हि नाभ्युपगम्यते भवत्सिद्धान्ते। किञ्च—यत्किञ्चिद्वस्तुनो नास्त्यादि-व्यवहारयोग्यतापादकत्वमेव चेदज्ञानस्वरूप, तदा निर्विषयस्य तस्य कथं संभवः?। अपिच—प्रपञ्चभ्रमोपादानभूतत्वमज्ञानस्य दुर्वचम्। नह्यवस्तुभूतस्यानिर्वचनीयस्य मिथ्याभूतस्य शुक्तिरूप्यादेः कटकादि-भ्रमपरिणामं कश्चिदनुभवति विवेकी। किञ्च—"निवर्त्यनिवर्तकभावः ज्ञानाज्ञानयोर्न विषयविशेषाधीनः, अपि तु वृत्तिविशेषापेक्षयैवे"ति एकोनषष्टितमे (५९) पुटे भवदुक्तमत्र विरुद्ध्यते, "समानविषय-कयोर्हि तयोर्निवर्त्यनिवर्तकभावः" इति। "प्रपञ्चभ्रमोपादानमज्ञानं श्रवणादिकारणविशेषजन्यद्वैताभावोपलक्षितब्रह्मात्मतत्त्वज्ञानेन निवर्तते" इत्येतदसङ्गतम्। उक्तनिवर्तकज्ञानस्यातत्त्वविषयकत्वात्। बाधकज्ञानस्य हि प्रमाणवृत्त्युपारूढत्वमेवापेक्षितमज्ञाननिवर्तने, न तूपलक्षणविधयापि पदार्थान्तरविषयकत्वम्। अतो द्वैताभावोपलक्षितेत्येतदसङ्गतम्।

किञ्च—श्रवणादिकारणविशेषजन्यत्वमपि न संभवति। साक्षात्कार-रूपस्य बाधकज्ञानस्य शब्दजन्यत्वायोगात्। परोक्षरूपत्वे तु न बाधकत्वमिति तु भवतैवोच्यते। तस्मात् भावरूपाज्ञानं नानुमान-प्रमाणसाध्यमिति सिद्धम्॥

॥ नापि श्रुतयस्तत्र प्रमाणम्॥

परैः भावरूपाज्ञाने प्रमाणतया "अनृतेन हि प्रत्यूढाः" इत्यादिश्रुति-वाक्यमुदाह्रियते। तत् परामृशामः। "एत ब्रह्मलोकं न विन्दन्ति। अनृतेन हि प्रत्यूढाः" इति श्रुतौ परब्रह्मप्राप्तिविरोधि यत्किञ्चित् अनृतशब्दार्थ इति गम्यते। अत्र प्राप्य पर ब्रह्मान्यत् तत्प्राप्तारो जीवात्मानोऽनेके इति स्वरसतः प्रतीयत इत्येतदस्तु। ब्रह्मप्राप्तिविरोधि किमिति चर्चायां यदेव प्रमाणप्रसिद्ध तदेव ग्राह्यम्। नैतावता कुत्रापि केनापि प्रमाणेन भवदभिमतभावाज्ञान सिद्धम्। अतोऽप्र-सिद्धस्य गगनकुसुमायमानस्य तस्य नात्र प्रसक्तिरिति तावन्निर्विवाद-मङ्गीकर्तव्यमेव। पर तु पापं कर्मैवात्रानृतशब्दार्थ इत्यवसीयते यथाप्रमाणम्। श्रुतावेव, "सर्वे पाप्मानोऽतो निवर्तन्ते" "क्षीयन्ते चास्य कर्माणि" इति सर्वकर्मक्षये मोक्षाभिधानेन परब्रह्मप्राप्तिप्रति-बन्धक कर्मैवेत्यवसीयते। स्मृतावपि, "अविद्या कर्मसञ्ज्ञान्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा॥ ससारतापानखिलानवाप्नोत्यतिसन्ततान्।" इति कर्मण एव बन्धकत्व-मुक्तमस्ति। तथाच तदेवात्रानृतशब्दार्थ इति निश्चीयते। किञ्च—ऋतशब्दः श्रुत्यादौ ब्रह्मणि कर्मणि च बहुलतया प्रयुक्त उपलभ्यते। लोकवेदयोस्सत्यार्थेपि प्रयुक्तो दृश्यते। प्रसिद्धेष्वेष्वर्थेषु कोर्थोऽत्र ग्राह्य इति विचारे सर्वात्मनाऽप्रसिद्धानिर्वचनीयार्थकत्वकथनमयुक्तमेव। अपिच—अनिर्वचनीयार्थेऽसिद्धे तत्र किं प्रमाणमिति प्रश्ने, उक्तरीत्या अन्यथासिद्धतत्प्रमाणोपन्यासो व्यर्थ एव॥

यदत्र (९४-पु) "यद्यपि 'ऋतं पिबन्ता'वित्यत्र ऋतशब्दस्य पुण्यमेवार्थः" इत्यादि—तदसङ्गतमेव। तत्रास्माभिः पुण्यार्थकत्वस्योच्यमानतया, तत्र 'यद्यपी'ति शङ्कायास्तावासंभवात्। बुभुक्षुमुमुक्षुभेदेन तत्र तत्र यथाप्रकरणं पुण्यपापयोर्निश्चेतव्यत्वाच्च। बुभुक्षोः फलाभिसन्धिकर्मैव पुण्यम्। मुमुक्षोस्तु तदपि पापमेव। अनभिसंहितफलं विद्योपयोगि कर्मैव पुण्यम्। तत्तु विद्योपयुक्तमुपक्षीणमेव। तदितरत्सर्वं पापशब्दाभिधेयं भवतीति तत्त्वम्। "'अनृतेन प्रत्यूढाः' इत्यत्रानृतशब्दस्यानिर्वचनीयवाचित्वमेव" इत्येतत्प्रतिज्ञामात्रमेव। अनन्यथासिद्धप्रमाणप्रमिते ह्यनिर्वचनीयेऽर्थवदेतत्प्रतिज्ञानं स्यात्। तस्मादेतत् वन्ध्यासुतप्रतिज्ञातुल्यमेव॥

यदप्युक्तं—(९४-९५-पु) "सत्यानृतशब्दौ प्रतिद्वन्द्विविषयौ दृष्टौ। 'सत्य चानृतं च सत्यमभवत्' 'न येषु जिह्ममनृतं न माया', 'नानृतं वदेत्' इत्यादौ मृषार्थकत्वेऽनृतपदं सुप्रसिद्धम्। तथा चार्थस्य मृषात्वं च बाध्यत्वमेवेति तस्यानिर्वचनीयत्व सिद्ध्यति। अनृतशब्दावयवार्थविवक्षायामपि "ऋतं सत्यं परं ब्रह्म" इत्यादौ ऋतसत्यशब्दयोर्यथाभूतार्थविषयकत्वे सति ऋतात्—अबाध्यात् ब्रह्मणोऽनृतमज्ञानं बाध्यमिति युक्तमेव" इति। तदसारम्। अत्रानृतपदस्यासत्यार्थकत्वाङ्गीकारेपि आनेर्वचनीयासिद्धेः। "यस्सदास्तीति केवलम्', 'अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः" इत्याद्युक्तरीत्या सदैकरूपत्वं सत्यत्वं, अतादृशं, "मही घटत्व घटतः कपालिका" इत्याद्युक्तरीत्या सततपरिणामशीलत्वमसत्यत्वमित्येवानृतशब्दार्थलाभात् अनिर्वचनीयत्वं न कथमपि लभ्येत। मृषात्वं—अर्थस्य बाध्यत्वमित्यसङ्गतम्। सर्वत्र प्रवृत्तेः प्रतिबन्धो वा नैष्फल्यं वा बाधशब्दार्थः, न त्वर्थबाध इति सम्यगुपपादितमेवाधस्तात्।

नहि शुक्तिरूप्यादावर्थबाधः। अन्यथाख्यातिवादिमतेप्यर्थस्य न सर्वात्मना बाधः। न बाधः इत्येतावन्मात्रं न, अपि त्वन्यत्रार्थसत्यत्वमवश्यापेक्षितं च। नदीतीरे पञ्चफलानि सन्तीत्युक्तौ नहि पञ्चफलानां सर्वात्मना बाधः। अपि त्वन्यत्र सत्त्वमेवाङ्गीक्रियते तेषाम्। नदीतीरेऽसत्त्वमात्रमेव। नहि तथा भवन्मते वक्तुं शक्यते। तथासति प्रपञ्चसत्यत्वस्यैवापत्तेः। "ऋतशब्दस्य शक्त्या पुण्यार्थकत्व वा लक्षणया वा" इत्यादिविचारः, "ननु ऋतशब्दस्य ऋतं पिबन्तावित्यत्र" इत्यादिना, "अनेकशक्तिकल्पनस्यान्याय्यत्वाच्च" इत्यन्तेन क्रियमाणः प्रकृतानुपयुक्त एव। न ह्यनेन विचारेण अप्रसिद्धानिर्वचनीयसाधनं संभवेत्। प्रसिद्धेष्वर्थेष्वेव हि अयं शब्दोऽत्रार्थे शक्तो वा लाक्षणिको वा। अत्रैवार्थे शक्तः, अर्थान्तरे लाक्षणिक एवेत्यादिविचारनिर्णयादिकं साम्प्रतम्। नहि सुतशब्दः वन्ध्यासुते शक्तो वा लाक्षणिको वेति कश्चिदनुन्मत्तो विचारयेत्। अतः प्रकृतार्थेऽधिक एवायं प्रसङ्गः॥

यत्तूक्तं (९५--पु) "अनृतेन हि प्रत्यूढाः इत्यत्रानृतपदं न पापवाचकम्। पापशून्यस्वभावस्यासङ्गस्यात्मनः कादाचित्कस्यापि पापसम्बन्धस्यासंभवात्। स्वापे पापकर्मणोऽभावाच्च। कर्मण आवारकत्वानुपपत्तेश्च। अविद्यां विना तत्परिणामरूपस्य तस्यासंभवात्। "अविद्यासञ्चित कर्मे"ति स्मृतेः। प्रतिबन्धकत्वे पुण्यपापतत्संस्काराणामन्यतमनियमे गमकाभावाच्च। न चाज्ञानपक्षोपि तुल्यदोष इति वाच्यम्। कल्प्यमादाय विनिगमनाविरहोपपादनासंभवात्। कल्प्यस्यानुपस्थितत्वात्। अनेकपापापेक्षया एकस्याज्ञानस्य लघुत्वाच्च" इत्यादि। तदिदमर्थापेतम्। असङ्गस्वभावस्यात्मनः पापसम्बन्धानुपपत्तिप्रश्नस्याज्ञानवादेपि समानत्वात्। नच वयमपारमार्थिकमेव तं वदाम इति वाच्यम्। वृषलोद्वाहमन्त्रतौल्यप्रसङ्गात्। तदिष्टत्वे तन्निरसनार्थप्रवृत्त्यनुपपत्तेश्च। न हि

मिथ्यासर्पसंहारार्थं कश्चित्प्रयतते। नच तत्र ज्ञानमात्रमेवापेक्षितम्। न प्रयत्न इति वाच्यम्। तदपेक्षणस्याप्यनुपपत्तेरेव। असङ्गस्वभावस्य सर्वथा दोषप्रसङ्गाभावे ज्ञानं वा किमर्थमपेक्ष्यते। वस्तुतोऽसङ्ग-स्याप्यात्मनः कर्मसम्बन्धो न विरुद्ध्यते। स्वरूपप्रयुक्तत्वाभावात्कर्मणाम्। अत एव स्वापे कर्माभाववचनमपि प्रत्युक्तम्। अन्यथा स्वापे मुक्तत्वप्रसङ्गात्। त्वयापि तस्य समाधेयत्वात्। "अनन्वागतं पुण्येन" इत्यादिकं तु विशेषतस्तत्कार्याभावपरमिति न विरोधः। कर्मणामावारकत्वं तु 'तया वेष्टिता' इत्यादिप्रमाणप्रतिपन्नमेव। त्वदीयाज्ञानस्यैवाऽऽवारकत्वं न संभवतीति तिरोधानानुपपत्तिप्रकरणे विस्तृतम्। कर्मणामावारकत्वं हि जीवीयज्ञानसंकोचकत्वमेव। 'अविद्यासञ्चितं कर्मे'त्यत्राविद्यापदं नानिर्वचनीयार्थकम्। त्वन्मते प्रपञ्चसामान्यस्यैव तदधीनत्वात्, कर्मणि विशेषाभावात्। परं तु "नष्टप्रज्ञः पापमारभते" इत्याद्युक्तानुसारेण विद्याभावपरत्वमेव। विनिगमनाविरहशङ्का नितान्तोपहास्या। नहि यागो वा तदधीनः कश्चिदपूर्वशब्दितो वा स्वर्गजनक इति विनिगमनाविरहं कश्चिदाशंकेत बुद्धिमान्। कल्प्ये भावाज्ञाने विनिगमनाभावोपपादनं तदा शोभेत, यदा तत्कल्पना प्रामाणिकी अवश्यापेक्षिता स्यात्। नहि पितृष्वसुः श्मश्रुलत्वं प्रकल्प्य पितृव्यत्वं विचारयेत्कश्चित्समनस्कः। लाघवकथनं तु लाघवायैव स्यात्। नहि क्लृप्तकल्प्ययोर्मध्ये कल्प्ये लाघवं शास्त्रज्ञो वा लौकिकपरीक्षको वा कश्चिन्मन्येत। "क्षीयन्ते चास्य कर्माणि" इति कर्मबहुत्वं प्रामाणिकं हि क्लृप्तम्। "तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्" इत्यनेन पुण्यकर्मफलभूतमपि देवेन्द्रत्वादिकं मुमुक्षोः अन्तराय एवेत्युक्तौ, "मोक्षफलं कामयमानस्याऽवर्जनीयतया स्वयमेवागच्छन्तो देवेन्द्रत्वादयोऽल्पफलभूतत्वादन्तराया इत्युच्यन्ते" इति यदुक्त त्वया, तदसङ्गतम्। 'स्वयमेवागच्छन्त' इत्यत्र

पुण्यं विनैवेत्यर्थे, अकारणककार्योत्पादापातात्। ततः पुण्यफलत्वमेव देवेन्द्रत्वादीनामङ्गीकार्यमिति तत्पुण्यमपि मुमुक्ष्वपेक्षया पापमित्युक्तं भवति।।

"त इमे सत्याः कामाः अनृतापिधानाः" इति श्रुतौ मुक्तप्राप्यपितृलोककामपिधायकवाच्यनृतपदं नाज्ञानार्थकं भवितुमर्हति। अत्र बहूना कामाना सत्यत्वोक्त्या तद्विपरीतार्थकत्वमेव सत्यवाचिऋतेतरार्थकानृतपदस्याङ्गीकार्यम्। भवन्मते बहुकामगतसत्यत्वं न पारमार्थिकं भवेत्। व्यावहारिकं वक्तव्यम्। तथाच तद्विपरीतार्थकत्वेऽत्रानृतपदस्य भोग्यभोगोपकरणादिप्रपञ्चस्य भवदभिमतव्यावहारिकसत्यत्वमपि न सिद्ध्येत् इति श्रुतप्रकाशिकातात्पर्य, (९५-पु) "तत्र भवत्सिद्धान्ते कामानामज्ञानजन्यत्वेन तदावृतत्वासंभवात् अत्रानृतपदस्य नाज्ञानार्थकत्व"मित्यन्यथा गृहीत्वाऽनूद्य, "तन्न—यद्यपि तत्र सगुणविद्याप्रकरणत्वात् अनृतपदं कर्मार्थकं स्यान्नाम। तथापि निर्गुणविद्याप्राप्यस्थले न युक्तं कर्मावरणम्। वस्तुतस्तु तेषामपि भोगोपयोगिदेहेन्द्रियादिविषयेषु ममेदमित्यभिमानात्मकमज्ञानमेवापिधानमुच्यते। तथाच सगुणस्थलेपि अज्ञानस्यैवावारकत्वमिति तदेवानृतशब्दार्थ इति नार्थभेदोपि" इति तत्प्रत्याख्याने या प्रत्याशा—सा निष्फलैव। सगुणनिर्गुणभेदस्यैव निर्मूलत्वात्। उपपादितं चैतत् विजयप्रथमभागे। किञ्च—श्रुतप्रकाशिकोक्तविषयस्य समाधानं नोक्तमेव। अनृतपदस्य बहुकामगतसत्यत्वप्रतिकोटिवाचित्वाभ्युपगमे उक्तविरोधस्यापरिहृतत्वात्। अपेचात्राज्ञानार्थकत्वासंभवे कारणं श्रुतप्रकाशिकायां कण्ठतोऽनुक्तमपि विवक्षितं तदज्ञात्वा, "कामानामज्ञानजन्यत्वेनावरणासंभवात्' इति अन्यथा तदनुवादश्च न युज्यते। तज्जन्यत्वे तदावरणासंभवाभावात्। कारणस्य कार्यव्याप्त्युपपत्तेः।

अतः, "सत्याः कामाः अनृतापिधानाः" इत्यत्रापि तदर्थकत्वमेवाङ्गीकर्तव्यम् हिशब्दस्वारस्यादिति सिद्धम् ॥

यच्चोक्तं (९६-पु) "ननु— न प्रसिद्धिरज्ञानेऽनृतशब्दस्येति चेन्न —ख्यातिबाधान्यथानुपपत्त्या, निर्विषयभ्रमासंभवेन चानिर्वचनीय वस्तुसिद्धेरुक्तत्वात्। लोके च अयथार्थवादिनि, अनृतवादी, मिथ्यावादी, मृषावादीति प्रसिद्धेः। "वितथ त्वनृतं वचः" इत्यादावनृतपदस्य बाध्यविषयकत्वात्, मिथ्यैव रजतमभादिति लौकिकव्यवहारप्राचुर्याच्चानिर्वचनीयवाचित्वं प्रसिद्धमेव" इत्यादि। तत्र उक्तमपि समाधनमाम्रेड्यते। अनिर्वचनीयतानुपपत्तिप्रकरणे ख्यातिबाधयोरन्यथासिद्धिः प्रतिपादितैव। भ्रमस्य सत्यविषयकत्वमप्युक्तमेव। भ्रमत्वादिव्यवस्था तु प्रवृत्तिबाधादिनैवेति चोक्तम्। अपिच यत्रकुत्रापि वा विषयसत्यत्वं विना नैव भ्रमापपत्तिरिति च निरूपितम्। किञ्च — अनृतपदस्याऽज्ञाने न प्रसिद्धिरित्याक्षेपे, ख्यातिबाधान्यथानुपपत्त्यादिनाऽनिर्वचनीयवस्तुसिद्धेरुक्तत्वादिति समाधानमसङ्गतमेव। वस्तुप्रसिद्धिरन्या। तत्र पदप्रसिद्धिरन्यैवेत्यवधातव्यम्। अनिर्वचनीयवस्तुसिद्धिरप्रामाणिकीत्युक्तमेव। तत्रानृतपदप्रसिद्धिर्दूरोत्सारितैव। नच—अनृतवादी, मिथ्यावादीत्युक्तमिति वाच्यम्। तावता त्वदभिमतासिद्धेरुक्तत्वात्। वस्तुतः प्रकृते कर्मार्थकस्याप्यनृतपदस्यासत्यार्थकत्वाङ्गीकारेपि सर्वथा वस्तुनो बाध्यत्वं न सिद्ध्येदित्यसकृदुक्तमेव। अन्यत्र वर्तमानं वस्तु अन्यत्र वर्तमानतया येनाभिधीयते स एवानृतवादीति लोकप्रसिद्धिः, नतु सर्वात्मनाऽवर्तमानस्य वस्तुनस्सद्भाववादिनस्तथा प्रसिद्धिः। नहि शशशृङ्गखपुष्पवन्ध्यासुतसद्भाववादिनं मृषावादीति मन्यन्ते लोकाः। अपि तु तमुन्मत्तमेव पश्यन्ति। इत्थंच भवदभिमतभावाज्ञानं प्रकृतानृतशब्दो

नाभिधत्त इति, "अनृतेन हि प्रत्यूढाः" इतीयं श्रुतिर्न तत्र प्रमाणमिति सिद्धम्॥

एवं नीहारशब्दोपि नाज्ञानवाची भवितुमर्हति। "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्याचासुतृप उक्थ शासश्चरन्ति॥" (ऋ-८-३-१७) इति श्रुतिः। अत्र प्रकरणे देवदेवस्य भगवतः श्रीमतो नारायणस्य सकलजगत्कारणस्य लिङ्गानि दृश्यन्ते। पूर्वसूक्ते, "य इमा विश्वा भुवनानि" इति ऋचा, "सोकामयत। बहुस्यां प्रजायेयेति। स तपोतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्" इति तैत्तरीयोक्तप्रकारेण सकलजगत्संहारं कृतवता भगवता पुनः सिसृक्षया जगत्सृष्ट्वा तदन्तःप्रवेशमुक्त्वा, ततः, "किस्वित् आसीदधिष्ठान"मित्यनया, निस्सहायस्य कथं जगत्कारणत्वमित्याशंक्य, अनन्तरया, "विश्वतश्चक्षुरुत विश्वतोमुखः" इति ऋचा सर्वात्मकत्वेन भगवतः कुलालादिविलक्षणत्वेन निस्सहायस्यापि जगत्कारणत्वमुपपाद्य, अनन्तरं, "किंस्विद्वन"मित्यनया उपादाननिमित्तकारणप्रश्नमुखेन तैत्तिरीयब्राह्मणगतया (२-८-९) "ब्रह्म वनं ब्रह्म सवृक्ष आसीत्" इत्यनया प्रतिपादितमभिन्ननिमितोपादानत्वं भगवतस्सूचयित्वा, अनन्तरं, "या ते धामानि परमाणि याऽवमा या मध्यमा" इत्यनया, उत्तममध्यमाधमभेदभिन्नं सर्वं जगत् भगवतश्शरीरमित्युक्त्वा, ततः ऋग्द्वयेन यज्ञाराध्यत्वमुक्त्वा, अनन्तरसूक्ते च, "चक्षुषः पिता मनसा हि धीरः" इत्यनया, "आपो वा इदमग्रे", "अप एव ससर्जादौ" इत्याद्युक्तरीत्या सृष्टिक्रममुक्त्वा, "यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा। यो देवानां नामधा एक एव तं संप्रश्नं भुवना

यन्त्यन्या" इत्यनया, सर्वजगत्कारणत्व-सर्वज्ञत्व-सर्वदेवनामकरण-तत्तद्देवपदवीस्थापन-सर्वदेवादृश्यमानत्वादिकं भगवन्महिमानमुपपाद्य, ततस्तिसृभिः ऋग्भिः, "त आयजन्त", "परो दिवा", "तमिन् गर्भं प्रथमं दध्र आपो यत्र देवा समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः॥" इत्यादिभिः, सर्वाराध्यत्व-सर्वाधारत्वादिकमाख्याय, ततः "न तं विदाथ" इत्यनया प्रकृतर्चा सर्वभूतैरविज्ञायमानत्वं, तत्र च नीहारप्रावृतत्वं कारणमिति चोक्तम्। अत्र सर्वत्र नारायणपरतया प्रसिद्धतैत्तिरीय-नारायणवल्लीप्रत्यभिज्ञानस्य स्पष्टतया श्रीमन्नारायणपरत्वमस्य प्रकरणस्य स्पष्टमेव। अपिच—जगतो भगवतश्च शरीरशरीरिभावादिकस्यापि अत्रोक्तत्वात् जगतो मिथ्यात्वादिकस्याप्रतिपादनाच्च नीहारशब्दो भावाज्ञानवाचको न भवतीति स्फुटं प्रतीयते। परमात्मनो जगदभिन्ननिमित्तोपादानत्वादिप्रतिपादनात् अज्ञानोपादानत्वकथाया वा विवर्तोपादानगन्धस्य वाऽत्राप्रसक्तत्वाच्च अत्राद्वैतकथा सुदूरनिरस्ता। अस्यां हि ऋचि 'युष्माकं अन्यत् अन्तरं' इत्यादिसन्दर्भेण जीवेश्वरभेदस्य पारमार्थिकत्वं परस्य जीवान्तर्यामित्वमित्यादिकमुक्तं स्पष्ट प्रतीयते। सति चैवं "जीवेश्वरभेदभ्रमोपादानावरणविक्षेप-शक्तिद्वयविशिष्टमज्ञानमेवावबोधयति। न तु कर्म" इत्यादिकथनं कथमिव घटेत?। प्रमाणान्तरानुसारात् पूर्वोक्तप्रकारेण नीहारशब्दः कर्मार्थक एवेति निश्चीयते। "भाविनः प्रपञ्चस्य बीजभूतं प्रथमं-अतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म, यत्—यतः कारणात् सृष्टिसमये आसीत्" इत्यादि (८-७-१७) ऋग्वेदभाष्यमप्येतदुपष्टं-भकमेव॥

यदत्र (९६-पु) "सादेस्तस्य (कर्मणः) अनादिभेदप्रयोजकत्व-सर्वकार्योपादानत्वाद्यसंभवात्" इत्यादि—तत् प्रमाणविरुद्धं विशिष्य

सूत्रविरुद्धं च। "न कर्माऽविभागादिति चेन्नानादित्वात्" इत्यनेन ससारबीजभूतस्य कर्मणोऽनादित्वं सूत्रकारैरेवोपपादितम्। नात्र विप्रतिपत्तिरुभयोरपि भाष्यकृतोः। सर्वकार्योपादानत्वं तु अज्ञानस्या-संभावितं, सूत्रकाराशयविरुद्धं, भाष्यविरुद्धं च। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यनेन निमित्तत्वमुपादानत्वं चेत्युभयमपि ब्रह्मण एवेति हि सिद्धान्तितम्। न ह्येकस्य घटस्योपादानद्वयमस्ति। ब्रह्मण उपादानत्वमुक्तरीत्या प्रामाणिकम्। अतोऽज्ञानस्योपादानत्वकथन-मेवाज्ञानमूलमिति निश्चेतव्यम्। "ब्रह्मणोऽन्यदुपादानकारणमशुद्ध्यादि-गुणकं स्मृतिप्रसिद्धमभ्युपगन्तव्यम्। ब्रह्मकारणत्वश्रुतेर्निमित्तत्वमात्रे पर्यवसानात् इत्येवं प्राप्ते ब्रूमः। प्रकृतिश्च–उपादानकारणं च ब्रह्माभ्युप-गन्तव्यम्। निमित्तकारणं च। न केवलं निमित्तकारणमेव।" इति शांकरभाष्यमत्रावधेयम्। अस्माभिरपि कर्मणो नोपादानकारण-त्वमुच्यते। अतोपि 'सादेः कर्मणः' इति कथन सिद्धान्तानभिज्ञता-निबन्धनमेव। कर्मणः सर्वकार्योपादानत्वाद्यसंभवापादनमिष्टापादनमेव॥

"नासदासीन्नो सदासीत्तदानी नासीद्रजो नो व्योमापरायत्। किमावरीवः कुहकस्य शर्मन्नंभः किमासीद्गहन गभीरम्॥ न मृत्युरा-सीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास॥ तम आसीत्तमसा गूढमग्रे प्रकेतं सलिलं सर्वमा इदम्। तुच्छेनाभ्वपिहितं यदासीत्त-पसस्तन्महिनाजायतैकम्॥" (८–७–१७) इतीमा ऋचः श्रूयन्ते। अत्र प्रलयदशा प्रतिपाद्यते। यद्यत्रानिर्वचनीयमुच्येत, तदा "सदेव सोम्येदमग्र आसीत्', 'असदेवेदमग्र आसीत्" इत्यादिकं नोपपद्येत। "एको ह वै नारायण आसीत् न ब्रह्मा नेशानः नेमे द्यावापृथिवी" इत्यादिश्रुत्यन्तरैकार्थ्येन सूक्ष्मचिदचिद्विशिष्टः नारायण एव प्रलय-

दृशायामासीदित्यर्थ एव स्वरसः। तदैव मनुस्मृतिसमानार्थकत्वं च। "आनीदवातं स्वधया तदेकं" "तपसस्तन्महिनाजायतैकम्" इति ह्यत्रोच्यते। अतोऽत्र सदसच्छब्दौ व्यष्टिचिदचित्परावेव। तयोर्लयोऽत्र प्रतिपाद्यते। "अस्मान्मायी सृजते" इति पूर्वं मायिनः प्रस्तुतत्वात्, कः मायी, का च मायेति शंकायां, "माया तु प्रकृतिं विद्यात्" इति विवरणात् मायोद्देशेन प्रकृतित्वस्यैव विधानात् न भवदभिमतसिद्धिः मायाशब्दप्रयोगमात्रेण। प्रकृतेर्मायात्वं तु आश्चर्यकरत्वादेवेति नानुपपन्नम्। सत्येऽपि मायापदप्रयोगेणाश्चर्यकरत्वस्यैव प्रवृत्तिनिमित्तत्वसंभवात्। किञ्च—"अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" इति शुद्धात्मस्वरूपेऽपि प्रयोगोऽस्ति। न तावता तस्यानिर्वचनीयत्वं स्यात्॥

यदत्रोच्यते, (९७-पु) "नासदासीन्नोसदासीदित्यस्य तृतीयमन्त्रस्थतमश्शब्देन दूरस्थेनापि अन्वयः। तेन च सदसद्वैलक्षण्यमर्थो लभ्यते" इति। तदसङ्गतम्। दूरान्वयदोषादेव। "यस्य येनार्थसम्बन्धः दूरस्थेनापि तेन सः" इति तु समीपान्वयालाभ एव। प्रकृते तु नालाभः। रजआदीना निषेध इव सदसतोरपि निषेधपरत्वेनात्रैवान्वयसंभवात्। तथाच "सच्च त्यच्चाभवत्" इति सृष्टिविषयभूतयोश्चिदचितोरेवात्र लयः प्रतिपाद्यत इति संगतेः दूरान्वयासभवात् नाज्ञानसिद्धिः। दूरान्वयाङ्गीकारेपि सदसद्वैलक्षण्य न लभ्येत। नहि—"नासदासीन्नोसदासीत्" इत्यस्यानिर्वचनीयमित्यर्थः कुत्रापि प्रसिद्धः। नापि निघण्ट्वादिषु तथा पठ्यते। नच सत्त्वेन वा असत्त्वेन वा निर्वक्तुमशक्यत्वार्थकत्वादस्य वाक्यस्यानिर्वचनीयपरता सुवचेति वाच्यम्। सद्वैलक्षण्येऽसत्त्वमेव, असद्वैलक्षण्ये सत्त्वमेवेति न प्रकारान्तरस्थितिसंभव इति न तदुभयवैलक्षण्यसंभव इति पूर्वमेवानिर्वचनीयतानुपपत्तिनिरूपणप्रकरणे निरूपितत्वात्। अतोऽत्र सदसच्छब्दौ

चिदचिद्व्यष्टिविषयावेव। नच पौनरुक्त्यं शक्यम्। "नासीद्रजः" इत्याद्युपरितनभागस्य विशेषपरत्वाश्रयणौचित्यात्। नच गत्यन्तरसत्त्वे तथाश्रयणमनुचितमिति वाच्यम्। गत्यन्तरस्य दूषितत्वात्। दूरान्वयरूपगत्यन्तराश्रयणेऽपि सदसद्वैलक्षण्यासंभवेन भवदभिमतानिर्वचनीयालाभस्योक्तत्वाच्च॥

यदुक्तं (९७-पु) "तस्यैव तमसः, 'तुच्छ्येनाभ्वपिहित'मिति सद्विलक्षणत्वाभिधानाच्चे"ति। तच्च ऋग्भाष्याज्ञानमूलमसङ्गतं च। भाष्ये हि तुच्छशब्दः भावाज्ञानपरो व्याख्यातः। तेन तुच्छ्येन तमसः पिहितत्वं कथमिव संगतं भवेत्। नहि स्वेन स्वं पिहितं भवेत्। किञ्च—तुच्छ्येन पिहितत्वं कार्यस्य जगत इति भाष्यम्। नतु तमसः। अपिच सद्वैलक्षण्यमनेन कथं नामाभिधीयेत। सदपि तुच्छशब्दितेनाज्ञानेन पिहितमेव हि। तथासति तद्वैलक्षण्यं कथं स्यात्। तत इदं त्वद्वचनं सर्वात्मनाऽसङ्गतमेव। नचात्र सदसच्छब्दौ न चिदचित्परौ व्युत्पन्नौ। व्युत्पन्नौ तु तथ्यातथ्ययोः। अतः अप्रसिद्धार्थापेक्षया प्रसिद्धार्थस्यैव ग्राह्यत्वमिति वाच्यम्। असत्—अतथ्यमित्यस्याप्यप्रसिद्धः। असद्वादिनः अतथ्यवादित्वाभावात्। नहि असन् घटः इति वादिनं अतथ्यवादिनं मन्यन्ते। अन्यत्र सत एव हि वस्तुनोऽन्यत्रासत्त्वमुच्यते। तत्र कथं मिथ्यात्वं स्यात्। नच तैत्तिरीयगसत्त्यच्छब्दौ न चिदचिद्वाचकौ इति वाच्यम्। भाष्यविरोधात्। "सर्वं जगत्सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः। अयमेवार्थः तैत्तिरीयके, तत्सृष्ट्वा। तदेवानुप्राविशत् इत्यारभ्य प्रतिपाद्यते। तत्रच भोक्तृभोग्ययोर्मध्ये' इति हि तत्र ऋग्भाष्यम्। ततस्तदैकार्थ्येनात्रापि सदसच्छब्दौ चिदचित्परावेव। नच—'द्वे वाव ब्रह्मणो रूपे' इत्यत्र सत्त्यच्छब्दयोः

मूर्तामूर्तपरतया श्रुतिव्याख्यानवैघट्यापत्तिरिति वाच्यम्। इष्टापत्तेः। न तदैकार्थ्यमत्र विवक्षितम्। अत्र तैत्तिरीये 'विज्ञानं चाविज्ञानं चे'त्यपि विभागसद्भावात् अचेतनस्य विज्ञानत्वायोगात्। अन्यथा 'सदेव सोम्य' इत्यादावपि सत्पदस्य, मूर्तपरतया श्रुत्यैव व्याख्यातसच्छब्दैकार्थ्यापत्त्या ब्रह्मपरत्वानुपपत्तेः॥

एतेन, "अर्थक्रमवशात् 'तम आसीत्' इत्यस्य प्रथमं, 'नासदासीत्' इत्यादेरनन्तर चाऽन्वयोऽभ्युपगम्यते।" इत्यादिक निरस्तं वेदितव्यम्। तथान्वयाभ्युपगमेपि अर्थासाङ्गत्यस्योक्तत्वात्। 'नासदासी' दित्यादौ पर्युदासाश्रयणमप्ययुक्तमेव। 'तस्य व्रत'मितिवदुपक्रमस्य वा विकल्पप्रसक्तेर्वा पर्युदासाश्रयणनिमित्तस्यात्राभावेन तदाश्रयणासंभवात्। तथाऽऽश्रयणेऽपि नञ्द्वयश्रवणात् 'नासदासी दि'त्यनेन मतः, 'नो सदासी'दित्यनेनासतश्चैव सद्भावसिद्ध्या सदसद्विलक्षणवस्तुलाभो न स्यादेव। किञ्च—घटो नास्तीत्युक्तौ असति बाधके अघटोस्तीत्यर्थाश्रयण न युक्त हि। नच—सन्नासीदीति निषेधविरोधः। ब्रह्मणस्सतो विद्यमानत्वादिति वाच्यम्। तर्हि'असदेवेदमग्र'इत्यादेरपि विरोधापत्तेः। नहि सतो ब्रह्मणोऽसत्त्वमुपपद्येत। अतस्सत्त्वासत्त्वे अवस्थाविशेषमादायैवोपपादनीये॥

यदत्रोक्तं—(९७-पु) "नच तमस इव ब्रह्मणोपि 'आनीदवात' मित्यादिवाक्यशेषात् अनिर्वचनीयत्वप्रसङ्ग इति वाच्यम्। वाक्यशेषविरोधादेव। 'सदेव सोम्येदमग्र आसीत्', 'सत्य ज्ञानमनन्त' मित्यादेर्विरोधपरिहारायैव 'स्वधया तदेक'मित्येकपदेन एकमेवेत्येकवाक्यत्वाभ्युपगमेन सदसद्विलक्षणशून्यसन्मात्रवस्तुनस्तदानीमस्तित्व-लाभात।" इत्यादि। तन्न—असङ्गतेः। 'आनीदवात'मित्यत्रानिर्वचनीयप्रसञ्जकस्याभावात्। नच 'तम आसी'दितिवत्

'आनीत् . . तदेक'मित्युक्त्या तदापत्तिरिति वाच्यम्। तथापि आनीदित्यादिना नासदासीदित्यादेरन्वयस्य त्वयाऽनभ्युपगमात्। नच 'स्वधया तदेक'मिति स्वधाशब्दिततमोवैशिष्ट्योक्त्या तदापत्तिरिति वाच्यम्। तद्वैशिष्ट्यस्य त्वया मिथ्यात्वाभ्युपगमात्। अन्यथा तदापत्तेः सर्वात्मनाऽपरिहरणीयत्वात्। अत इयमापत्तिरनुपपन्नैव। परिहारः ततोप्यत्यन्तानुपपन्नः। 'स्वधया तदेक'मित्यस्य 'एकमेव' इत्यादेश्च एकवाक्यत्वोपगमेपि 'तम आसीत्' इत्युक्तत्वात् ब्रह्मभिन्नस्य तमसोपि सत्त्वेन कथं सदसद्विलक्षणशून्यसन्मात्रवस्तुसद्भावलाभः?॥

यच्चोक्त (९८-पु) "'न सत्तन्नासदुच्यते' इत्यत्र ब्रह्मणः नानिर्वचनीयत्वमुच्यते। सदसद्विलक्षणत्वाप्रतिपादकत्वात्। वाचामगोचर सदिति वा असदिति वा निरूपयितुमशक्यं सत्तामात्रं ब्रह्मेत्येवमर्थकत्वात्। 'यतो वाचः' इत्यादिश्रुतेः। अथवा सदसत्पदे कार्यकारणपरे। तथाच कार्यकारणातीतं शुद्ध ब्रह्म ज्ञेयमिति तस्यार्थः।" इत्यादि—तन्न सङ्गतम्। सदिति वा असदिति वा निर्वक्तुमशक्यत्वस्यैवा-निर्वचनीयत्वरूपतया त्वदभ्युपगमात् ब्रह्मणोप्युक्तरीत्याऽनिर्वचनीयत्व-स्यैवापत्तेः। 'यतो वाचः' इत्यादेस्तत्रापि तुल्यत्वात्। किञ्च—सदिति निरूपयितुं कुतो न शक्यते। अपिच "जन्माद्यस्य यतः" इति जिज्ञास्यतयोक्तस्य ब्रह्मणो लक्षणं जगत्कारणत्वमिति सूत्रकारा वदन्ति। त्वं तु कार्यकारणातीतं शुद्धं ब्रह्म ज्ञेयमिति वदसि। इतोपि किमपेक्षितं त्वन्मतस्य सूत्रशास्त्रबाह्यत्वे। किञ्च—कथं ज्ञेयत्वं शुद्धस्य ब्रह्मणस्त्वन्मते?। अपसिद्धान्तात्। यदत्रोच्यते—"सर्वप्रलये परिशिष्यमाणस्य तमसस्सत्यत्वशंका माभूदित्यनिर्वाच्यत्वव्यवस्थापनपरे वाक्येऽस्मिन् कालभेदसम्बन्धस्याविवक्षितत्वात्" इत्यादि—तदसारम्। सर्वप्रलये परिशिष्यमाणत्वादेव तमसस्सत्यत्वास्थिरीकरणात्। श्रुतो

सर्वत्र नियमेन सृष्टिप्रलययोः कालनिर्देशदर्शनात् तदविवक्षितत्वा-साङ्गत्याच्च। नचासीदिति भूतनिर्देशेन इदानीमसत्त्वप्रसङ्ग इति वाच्यम्। भावापरिज्ञानात्। यादृशावस्थस्य पूर्वं सत्त्वमुक्तं, तादृशावस्थस्य इदानीमसत्त्वमेवाङ्गीक्रियते। इदमत्रावधेयम्—"यदा तमस्तन्न दिवा न रात्रिः", "सोभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमवासृजत्॥" इत्यादिप्रमाणानुसारेण 'नासदासी'दित्यादिना स्थूलप्रपञ्चनिषेधं कृत्वा, 'आनीदवातं स्वधया तदेकं', 'तम आसी'दित्यादिना तमश्शब्दितसूक्ष्मप्रकृतिशरीरावस्थं ब्रह्मास्तीत्युक्त्वा, उपरि "कामस्तदग्रे समवर्तत" इत्यादिना जगत्सृष्टिः प्रतिपाद्यत इति॥

यदत्रोच्यते (९८-पु) "तथाच प्रलयेपि सर्वं जगदासीदेव" इत्यादिकम्। तदिदं त्वदुक्त्यैव व्याहतम्। पूर्वं हि "स्वधया तदेकं, एकमेवाद्वितीयमित्यैकार्थ्येन सदसद्विलक्षणशून्यसन्मात्रवस्तुनः तदानीमस्तित्वलाभात्" इत्युक्तम्। व्याहतभाषणरसिका हि यूयम्। एतावता 'नासदासी'दित्यादिकमपि त्वदीयभावाज्ञानसाधकं न भवतीत्युक्तम्॥

मायापदमाश्चर्यसर्गकरत्वप्रवृत्तिनिमित्तकमेव। "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिकस्यैवात्र प्रमाणत्वात्। अनिर्वचनीयत्वस्य निरूपयितुमशक्यत्वस्य स्थापितत्वाच्च। आसुरास्त्रादौ चानिर्वचनीय-त्वस्यासंभवात् न तत्रानिर्वचनीयत्वं मायापदप्रवृत्तिनिमित्तम्। तदस्त्राणां सत्यत्वमेव। न ज्ञानबाध्यत्वम्। तथासति ऐकैकश्येन सूदनायोगात्। विचित्रसर्गकरत्वमेव प्रवृत्तिनिमित्तमितीदं दैवादकामेनापि त्वया लिखितमत्र दृश्यते। "इन्द्रो मायाभिः पुरुरूप ईयत' इत्यादौ पुरुरूपहेतुतया विचित्रानेकशक्तिवाचकत्वमेवावगम्यते। तावता तदेव

प्रवृत्तिनिमित्तं भवितुमर्हति” इति ह्यत्र त्वदीय वाक्यम्। “निर्देन्तत्वेच्छया निद्रा”मिति न्यायोऽत्र युक्तः स्मर्तुम्। “माया ह्येषा” इत्यत्रापि मायापदवाच्यप्रकृतिकार्येषु तत्पदप्रयोग इति स्पष्टम्। विचित्रसर्गकरत्वं कर्मणि यदि प्रामाणिकं, तदा तत्रापि मायापदप्रयोगो न दूष्य एव। तत्त्वज्ञानबाध्यत्वमेव मायात्वमिति तु न संगतं वचः। कस्यापि तत्त्वस्य तत्त्वज्ञानाबाध्यत्वात्। अवस्थाविशेषास्तु निवर्तन्ते। “कर्मणः भोगेनैव क्षयात्” इति त्वदुक्तमसंगतम्। प्रायश्चित्तनाश्यत्वानापत्तेः। यत्त्वत्रैव पुटे—“ज्ञानार्थक न मायापदम्। ज्ञानार्थकमयधातोः धातुपाठेऽश्रवणात्” इत्यादिकम्। तत्रोच्यते। “मय गतौ” इति पठितात्, गत्यर्थकानां ज्ञानार्थकत्वमितिन्यायेन ज्ञानार्थकात् धातोरेव मायाशब्दनिष्पत्तेर्युक्तत्वात्। “मी-गतौ” इत्यपि धातुः पठ्यते। ततो वाऽस्य पदस्य निष्पत्तिर्युक्ता। प्रमाणार्थकमीधातुपाठो न दृश्यते। अज्ञानरूपभावपदार्थस्य त्वदभिमतस्यैवाप्रसिद्ध्या कथं तत्रास्य मायाशब्दस्य रूढिः स्यात्। “माया वयुनं ज्ञान’ इति निघण्टुबलाच्चास्य ज्ञानार्थकत्वे नानुपपत्तिः। मायापरिणामत्वेन ज्ञाने मायापदप्रयोग इति कोशतात्पर्यवर्णनमयुक्ततमम्। ज्ञानस्य मायापरिणामत्वायोगात्। सत्त्वात्सञ्जायते ज्ञानम्। वृत्त्यवच्छिन्नचैतन्यस्यापि न मायापरिणामत्वम्। वृत्तेरेव तथात्वपर्यवसानात्॥

यदप्युक्तं—(९९-पु) “‘ऋतेऽर्थं यत्प्रतीयते’ इति स्मृत्या मिथ्याभूते मायापदशक्तिनिरूपणात्” इत्यादि। तदिद निरस्तप्रायमेव। मिथ्याभूते मायापदशक्त्यनिरूपणात्। ऋतेऽर्थमिति किं सर्वथा सर्वत्रार्थाभावो विवक्षितः, उतान्यत्र सतः तत्रपरमभावः?। आद्ये—शशशृङ्गस्यापि प्रतीतिप्रसङ्गः। अन्त्ये च—मिथ्यात्वासिद्धिः, अद्वैतहानिश्च। ततश्च मायापदमुक्तरीत्या विचित्रार्थसर्गकरत्वप्रवृत्तिनिमित्तकमेवेति सिद्धम्॥

॥ एवमर्थापत्तिरपि भावाज्ञाने न प्रमाणम् ॥

मिथ्याभूतजगतो मिथ्याभूतमेव कारणमिति मिथ्याकार्यसलक्षणं भावाज्ञानं परिकल्प्यत इत्यद्वैतिनः। तत्र जगतो मिथ्यात्वमेव न सिद्धम्। प्रमाणाभावात् इति पुरस्तादेव निरूपितम्। अबाधितप्रत्यक्षसिद्धजगतः, प्रत्यक्षेण वा तन्मूलकानुमानेन वा, "असंनिकृष्टवाचा हि द्वयमत्र जिहासितम्। ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोपि वा॥" इत्युक्तन्यायेन अबाधितप्रत्यक्षादिसिद्धार्थनिषेधाशक्तश्रुत्यादिशब्दप्रमाणेन वा बाधायोगात्। सिद्धेपि जगतो मिथ्यात्वे, "न विलक्षणत्वात्" इत्यादौ कार्यकारणयोस्सालक्षण्यनियमाभावस्योपपादितत्वेन मिथ्याभूतभावाज्ञानकल्पनमयुक्तमेव। भवद्भिरपि विलक्षणयोरपि व्यावहारिक प्रातिभासिकयोरविद्याशुक्तिरजतयोः कार्यकारणभावोऽङ्गीकृतश्च। अतोऽर्थापत्तिरपि न तत्र प्रमाणीभवितुमर्हति॥

यदुक्तं (९९-पु) "तदपि न। मृषाकार्योपादानभूतमुपादेय सलक्षणमेव कल्प्यते। दृष्टानुसारित्वात्कल्पनायाः" इत्यादि। तदुपहास्यम्। "सदेव सोम्येदमग्र आसीत्" "ब्रह्म वा इदमग्रे" "एको ह वै नारायण आसीत्" इत्यादिश्रुत्यादिप्रमाणैः, "जन्माद्यस्य यतः", "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादिसूत्रैश्च जगत्कारणविशेषस्य स्पष्टं प्रतिपाद्यमानत्वेन भवदज्ञानपरिकल्पनानैरपेक्ष्यात्। नच—नविलक्षणत्वन्यायो न विरुद्ध्यते। उपपत्तिप्रदर्शनमात्रपरत्वात्तस्य। जगतश्चेतनकारणकत्वे आक्षिप्ते, शकृद्वृश्चिकादिदर्शनं प्रदर्श्य सालक्षण्यनियमभङ्गे प्रदर्शिते, शकृद्वृश्चिकादेः केनचित्सालक्षण्येऽभ्युपगम्यमाने प्रकृतेपि जगद्ब्रह्मणोरपि तथा सादृश्यसंभवस्योपपाद्यत्वात्—इति वाच्यम्। तुल्यन्यायेन प्रधानकारणवादस्येव भावाज्ञानकारणवादस्यापि निरासिसिद्धेः। तथाचाज्ञानकारण-

वादोयं श्रुतिस्मृतीतिहासपुराणसूत्रन्यायविरुद्धः स्वकपोलमात्रकल्पितः अज्ञानमूल एवेति सिद्धम् ॥

यदपिचोक्तं (९९-१००-पु) "विवर्तोपादानं न सालक्षण्यमपेक्षते। दृश्यन्ते हि मरीचिकादिषु जलाद्यारोपाः। नियतपूर्ववर्तित्वे सति कार्यानुगतप्रतीतिविषयत्वादुपादानत्वं परिणामिन इव विवर्ताधिष्ठानस्य नानुपपन्नम्। ब्रह्म च विवर्तोपादानम्। कार्यसालक्षण्यं परिणाम्युपादान एव।" इत्यादि। तदप्रामाणिकम्। नहि परिणाम्युपादानापेक्षया विवर्तोपादानं नाम अन्यत् किञ्चिदुपलभ्यते श्रुत्यादिषु। सद्विद्याप्रकरणोपात्तमृद्घटादिदृष्टान्तत्रयमपि विवर्तोपादानवादपरिपन्थि। भ्रमाधिष्ठानस्योपादानत्वमेवाप्रामाणिकम्। नहि मरीचिकादिषु जलाद्युपादानत्वं कोपि जानीते। ब्रह्मणो विवर्तत्वमित्यप्यवैदिकममौत्रं च। नियतपूर्ववर्तित्वे सति कार्यानुगतप्रतीतिविषयत्वमपि गोमयवृश्चिकादिषु व्यभिचरितमेव। गोमयस्य तत्र कार्यानुगतप्रतीतिविषयत्वाभावात्। अत एव "कार्यसालक्षण्यं परिणाम्युपादान एवे"त्यपि निरस्तम्। नच प्रातिभासिकाज्ञानस्य व्यावहारिकवियदाद्युपादानत्वेपि अत्यन्तं सालक्षण्यं न तत्रापेक्षितम्। यावत्संभवं सादृश्यानुसरणात्। प्रातिभासिकत्वादेरुपादानोपादेयभावाघटकत्वादिति वाच्यम्। यावत्संभवं सादृश्यस्य ब्रह्मजगतोरपि सत्त्वादज्ञानकल्पनावैयर्थ्यात्। अत्यन्तसादृश्यस्य तत्राघटकत्वात् ॥

यदुक्तं—(१००-पु) "किञ्च दृश्यत्वादिना मिथ्याभूतस्य प्रपञ्चस्य दोषानुगतब्रह्मोपादानत्वे सिद्धे दोषान्तरानिरूपणात् अज्ञानमेव दोष इति तत्सिद्धिः। नहि परमतेपि स्वरूपेण ब्रह्मणः (उपादानत्वं) परिणामित्वमभिमतम्। विकारित्वापातात्" इत्यादि। तत्र वदामः। मिथ्यात्वप्रयोजकं न भवति दृश्यत्वम्। विपक्षे बाधकाभावात्।

प्रत्यक्षेण बाधितश्चायं हेतुः। परमात्मनि व्यभिचरितश्च। "तस्मिन् दृष्टे परावरे" इति हि श्रुतिस्तस्य सत्यस्य ब्रह्मणो दृश्यत्वमाह। किञ्च-दोषानुगतब्रह्मोपादानकत्वे जगतः, तत्र दोषस्य मिथ्यात्वेऽनवस्था। सत्यत्वेऽद्वैतहानिः। तस्य दोषस्य स्वपरनिर्वाहकत्वे, प्रपञ्चस्यैव स्वपरनिर्वाहकत्वाङ्गीकारो युक्त इति किमविद्याकल्पनया। ततश्च दोषानुगतब्रह्मोपादानत्वमेवासिद्धम्। तथाच ब्रह्मणः सत्यभूतजगदुपादानत्वे दोषान्वेषणं व्यर्थमेव। ननु शुद्धब्रह्मणो जगदुपादानत्वागीकारे विकारित्वापत्तिरिति चेन्न—शरीरभूतसूक्ष्मचिदचिद्विशिष्टस्यैव तस्य तदुपगमात्। नच—शरीरभूतचिदचिद्गतत्वादुपादानत्वस्य ब्रह्मण्यसिद्धिः। नहि शरीरगतं बाल्यादिकमात्मनि संभवतीति वाच्यम्। वियुक्तयोः सूक्ष्मचेतनाचेतनरूपविशेषणब्रह्मरूपविशेष्ययोः पृथगुपादानभावानुपपत्त्या विशिष्टयोरेव तदुपगमौचित्यात्। नहि त्वदुपात्ते दृष्टान्ते शरीरमात्रस्योपादानोपादेयभाव उपपद्यते। शरीरविशिष्टचेतन एव हि बालो भूतः युवा जायते। निर्जीवस्य शरीरस्य बाल्याद्यभावात्। विशिष्टोपादानोपादेयभावश्चायं प्रमाणप्रतिपन्न इति निपुणमुपपादितमेवाधस्तात्। अत एवास्य ब्रह्मणो हेयसम्बन्धगन्धोपि न प्रसज्यते। नचैवं सति परस्य सद्वारकमेवोपादानत्वमुक्तं भवति, परिणामस्य शरीरे बाल्यस्येव चिदचितोरेव सत्त्वात्। इदं च सद्वारकोपादानत्वं "आत्मानं स्वयमकुरुत" इत्यादिसाक्षाद्ब्रह्मोपादानत्वप्रतिपादकश्रुतिविरुद्धमिति वाच्यम्। सूक्ष्मचिदचिच्छरीरकत्वरूपावस्थायास्साक्षादेव ब्रह्मगतत्वेन उपादानत्वस्य मुख्यत्वात्। मृदः पिण्डावस्थाश्रयत्वमेव हि उपादानत्वम्। घटत्वावस्थाश्रयत्वं चोपादेयत्वम्। एवं प्रकृतेपि ब्रह्मण एव सूक्ष्मजगच्छरीरकत्वावस्था स्थूलजगच्छरीरकत्वावस्था चेति उपादानत्वे वा उपादेयत्वे वा न किञ्चिदनुपपन्नमिति ध्येयम्। "बहु स्या प्रजायेये"त्युक्तसङ्कल्पानुगुणं आत्मानमेव नानानामरूपविभक्तचेतना

चेतनशरीरकमकरोदित्यर्थकतया "तदात्मानं स्वयमकुरुते"ति श्रुति-विरोधोपि नास्ति। प्रत्युत श्रुत्यानुकूल्यमेव। भवतामेवेयं श्रुतिर्विरुद्धा। ब्रह्मणि जगद्भ्रमार्थकत्वाभावात्। नहि कश्चिद्विवेकी, 'अहं भ्राम्येय' मिति संकल्प्य भ्राम्येत्। नापि च "भ्राम्यन्तमात्मानमकरोत्" इति तस्याः श्रुतेरर्थः॥

एवं 'गाढं मूढोहमस्वाप्सम्। न किञ्चिदवेदिषम्' इति प्रतिबुद्धपरामर्शान्यथानुपपत्त्यापि भावाज्ञानं न प्रसिद्ध्यति। तस्य परामर्शस्य ज्ञानाभावविषयकत्वात्। अत्र संस्कारनाशकदेहविगम–नारकदुःख-प्रसूतिव्यसन-कालविप्रकर्ष-अनुभवानभ्यास-अतत्परत्वादिप्रबल-हेत्वभावविशिष्टानुभवाभावे साध्ये नियमेनास्मरणमेव हेतुः। यथा स्वप्नकाले जायमानानुभवानां साकल्येन स्मरणाभावेपि केषांचिदपि वा कदाचित्स्मरणं भवति, तथा सुषुप्तिकालेपि चेदनुभवः स्यात्, तदा तस्यापि संस्कारनाशकपूर्वोक्तप्रबलहेत्वभावेन कदाचिदपि वा कुतो वा स्मरणं नास्ति?। अत एव संस्कारनाशादिनाऽन्यथासिद्धिरपि दुर्वचा। ततस्संस्कारनाशकहेत्वभावे नियमेनास्मरणमनुभवाभावं साधयेदेवेति न किञ्चिदवेदिषमित्युक्तपरामर्शोपि अनुभवाभावविषयकत्वेन न भावाज्ञान-साधनम्। नच—विशेषविज्ञानानामानन्त्येन तदभावसाधकास्मरणस्यापि आनन्त्ये सति पुरुषायुषेणापि न किञ्चिदवेदिषमिति परामर्शासंभव इति वाच्यम्। तथासति सामान्यनिषेधस्यैव सर्वत्रासंभवापत्तेः। नहि लोके वृत्तवर्तिष्यमाणवर्तमानसर्वघटविशेषमविज्ञाय "अत्र न कोपि घटोऽस्ति" इति घटसामान्यनिषेधो युज्यते त्वदुक्तरीत्या। अतोऽनुभवानन्त्येपि सुषुप्तिकाले सामान्यतोऽनुभवाभावस्यैव साधनीय-तया प्रातिस्विकरूपेणाऽविवक्षणात् तत्सामान्यविषयकनियतस्मरणसामान्या-भावस्य हेतुत्वेऽनुपपत्त्यभावात् तादृशपरामर्शः उपपद्यत एव॥

यदुक्तं (१००-पु) "यथाश्रुतं वा तल्लिङ्गं, उत सुषुप्तिकालावच्छेदेन वा। नाद्यः—असिद्धेः। इदानी विशेषविज्ञाने सति कथं तदभावः अस्मरणेनानुमातुं शक्यते। उपेक्षणीयज्ञान वत्त्वेनास्मर्तरि उक्तज्ञानसत्त्वेन तत्र व्यभिचाराच्च। न द्वितीयः—जागरस्वप्नकालभिन्नस्यैव सुषुप्तिकालत्वेन तस्य च यावद्विशेषज्ञाना भावप्रतीतिमन्तरा पक्षीकर्तुमशक्यत्वात्। प्रतियोगिसिद्ध्यसिद्धिभ्यां व्याघाताच्च" इति। तदसङ्गतम्। संस्कारनाशप्रतिबन्धान्यतरहेत्व-भावविशिष्टानुभवाभावः नियतास्मरणरूपलिङ्गेन साध्यते। सति चैवं त्वदुक्तविकल्पस्यात्र नैवावसरः। द्वितीयविकल्पोपि न कल्पते। सुषुप्तिकालावच्छेदेनास्मरणस्य हेतुत्वाविवक्षणात्। प्रथमविकल्पदूषणं चोपहास्यम्। इदानीं विशेषविज्ञाने सत्यपि सुषुप्तिकालावच्छेदेन उक्तरीत्या विशिष्टानुभवाभावसत्त्वेन बाधाभावात्। अतः 'असिद्धे' रिति त्वदुक्तहेतोरेवासिद्धिः। किञ्च 'असिद्धे'रिति हेत्वसिद्धिं प्रतिज्ञाय, उपरि, 'विशेषविज्ञाने सती'ति साध्याभावोपपादनमसङ्गततममेव। अत एव च, "उपेक्षणीयज्ञानवत्त्वेनास्मर्तरि" इत्याद्युक्तं निरस्तम्। तदानीमुपेक्षणीयज्ञानवत्त्वेपि अतत्परत्वरूपसंस्कारप्रतिबन्धकसद्भावेन तदभाववैशिष्ट्यरूपविशेषणाभावेन विशिष्टाभावरूपसाध्यस्यापि सत्त्वेन व्यभिचाराभावात्। द्वितीयविकल्पस्यानभ्युपगमादेव तद्दूषणमुपेक्ष्यम्। प्रतियोगिसिद्ध्यसिद्धिभ्यां व्याघातोपि नास्ति। साध्यकोटिप्रतियोगिन इवास्यापि प्रतियोगिनोऽन्यत्र प्रसिद्धिसंभवात्॥

यदत्रोक्तं (१०१-पु) "अपि चास्मरणस्य ज्ञानाभावहेतुत्वे ज्ञानकालेपि तस्यास्मरणात् अभावः प्रसज्येत" इत्यादिकं—तदिदं ज्ञाना-भावमूलकमेव। नियतास्मरणस्यैव हेतुत्वविवक्षणात्। नहि केवलास्मरणं हेतूकृतम्, येनेदं प्रसञ्जनं नायुक्तं भवेत्। तथाच ज्ञानकाले तेन

संस्काराजनने तत्संस्कारप्रतिबन्धकसद्भावावगमेन तदभाववैशिष्ट्यरूप-विशेषणाभावप्रयुक्तस्य विशिष्टानुभवाभावरूपसाध्यस्य सत्त्वेन, तेन ज्ञानेन संस्कारजनने च तत्प्रतिबन्धकाभावविशिष्टानुभवसत्त्वेन तदभावरूपसाध्याभावे उत्तरत्र स्मरणजननात् नियमेनास्मरणरूपहेतोरप्यभावेन नानुपपत्तिलेशोपीति बोध्यम्। अत एव, "ज्ञानकालान्यकालावच्छिन्नतदस्मरणं ज्ञानाभावसाधक"मिति भवदीयपरिष्करणोल्लेखोपि प्रत्युक्तः। अनभ्युपगमात्, असंभवाच्च। एतच्च सर्वं—"तदन्यधीरतात्पर्य पटुत्वविरहो धियः। दुःखादितीव्रमुन्मादोऽनभ्यासो दीर्घकालता॥ एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु। एतेष्वसत्स्वस्मरणात् ज्ञानाभावोऽनुमीयते॥" इति, "उक्ततिरस्कारकरूपप्रतिबन्धक-रहितानुभवो यत्र, तत्र स्मरणमित्यप्रतिबन्धानुभवस्य स्मरणं व्यापकम्। अतश्च स्मरणरूपव्यापकाभावेन अप्रतिबन्धानुभवाभावे साध्ये देहविगमादिप्रतिबन्धकाभावरूपस्य विशेषणस्य सिद्धतया विशेषणवति विशिष्टाभावस्सिद्ध्यन् विशेष्यरूपानुभवाभावमादाय पर्यवस्यतीति भावः" इति च भावप्रकाशिकायां स्पष्टमुक्तम्॥

यच्चात्रैव (१०१-पु) "नच स्मृतिरप्ययं ज्ञानाभावस्यैवेति वाच्यम्। तत्र प्रतियोगिभूतज्ञानाभावज्ञानासत्त्वे सुषुप्तौ तदभाव-ज्ञानायोगात्। तत्सत्त्वे तु सुषुप्तिव्याघातात्। नच त्वन्मते सुषुप्तौ संकुचितमात्मधर्मभूतज्ञानं भासत इत्युपेयते। येनेदानीं सौषुप्तपरामर्शः प्रतियोगिभूततादृशज्ञानापेक्षया ज्ञानाभावविषयक उच्येत। तथासति सिद्धान्तविरोधः स्यात्" इति। तदेतत् असङ्गतम्। "प्रतियोगिभूत-ज्ञानाभावज्ञानासत्त्वे" इतीदं पदं किमर्थकम्। विशिष्टानुभवाभावे साध्ये प्रतियोगिभूतः अनुभव एव भवति। एवं सति अत्र प्रतियोगिभूतज्ञानाभावज्ञानसत्त्वासत्त्वविचारोऽप्रसक्तस्सुतराम्। 'सुषुप्तौ

तदभावज्ञानायोगात्' इतीदमनर्थकमेव। सुषुप्तौ ज्ञानसामान्यस्याभावात् तदभावज्ञानं को ब्रवीति, येन तदयोगादित्याशंक्येत। अतएव सुषुप्तिव्याघातापत्तिरपि निरर्था। "सुषुप्तौ धर्मभूतज्ञानस्य भानाङ्गीकारे एव न किञ्चिदहमवेदिषमिति इदानीन्तनसौषुप्तपरामर्शस्य ज्ञानाभाव-विषयकत्वं संभवदुक्तिक"मिति त्वदीयकल्पना निरालम्बनैव। सुषुप्तिदशायां चेत् धर्मभूतज्ञान भासेत, तर्हि कथं सा सुषुप्तिदशा स्यात्?। कथं वा तत्र ज्ञानसामान्याभावः साधयितुं शक्येत। कथं वा एतत्परामर्शः ज्ञानसामान्याभावविषय इत्युच्येत। इदं सर्वमकाण्डताण्डवम्॥

इदं त्विह तत्त्वम्। यत्र न किमपि ज्ञानं भासते, मनः—पर्यन्तसर्वेन्द्रियोपरतिरूपा सैव सुषुप्त्यवस्थेति सर्वसंप्रतिपन्नम्। तदा धर्मभूतज्ञानं स्वरूपतोऽवतिष्ठत इत्युपेयते श्रुतिवशात्। तस्य स्वयंप्रकाशत्वं तु विषयग्रहणवेलायामेव। सुषुप्तौ तु इन्द्रियो-परमात् विषयाग्रहणात् स्वयंप्रकाशस्वभावस्यापि धर्मभूतज्ञानस्य न भानमस्ति। सुप्तोत्थितस्तु 'न किञ्चिदहमवेदिष'मिति प्रत्येति। अस्य परामर्शस्याप्रसिद्धाप्रामाणिकभावाज्ञानविषयकत्वकल्पनापेक्षया प्रसिद्धप्रमाणप्रतिपन्नज्ञानसामान्याभावविषयकत्वेनैवोपपत्तिरुचिता। जाग्र-दाद्यवस्थास्वनुभूता अर्थाः केचन पश्चात्स्मर्यन्ते। केचन न। अत्र उभयथापि कारणं भवितुमर्हति। प्रतिबन्धेन संस्काराजननमेकम्। उत्पन्नस्यापि तस्य नाशरूपमपरम्। तत्र तत्र प्रतिबन्धे नाशे चेमे हेतवः अन्यत्र व्यासङ्गः, तत्परत्वाभावः, बुद्धेः पाटवराहित्यं, तीव्रसुखदुःखाद्यनुभवः, उन्मादः इत्यादयः। ईदृशकारणाभावे संस्कारावश्यंभावेन तद्द्वाराऽनुभूतस्य नियमेन स्मरणं भवतीति सुनिश्चितमेतत्। एवं सति, सुषुप्तिकाले न किमपि ज्ञानमासीत्।

यद्यभविष्यत् पूर्वोक्तकारणाभावात् इदानीमस्मरिष्यत्। इदानीं नियमेनास्मरणात् पूर्वं ज्ञानं नासीदेवेति सुप्तोत्थितस्यैतत्परामर्शो जायते 'न किञ्चिदवेदिष' मिति। यत्तु ज्ञानसामान्यं निषिध्यते सुषुप्तौ, प्रतियोगिभूतं तत् जाग्रद्दशादिषु प्रसिद्धमेवेति न प्रतियोग्यप्रसिद्धिप्रसङ्ग इति ॥

यच्चोक्तमत्रैव (१०१-पु) "ननु ज्ञानाभावोपि साक्षिणैव गृह्यताम्। सप्रतियोगित्वेनाभावज्ञान एव प्रतियोगिज्ञानापेक्षणादिति चेन्न—अभावस्यानुपलब्धिगम्यत्वेन साक्षात्साक्षिवेद्यत्वासंभवात्। तस्मात्सुषुप्तौ अनुभूताज्ञानस्मृतिरेवाय परामर्शः। भावरूपत्वादस्य न प्रतियोगिनिरूप्यत्वम्"—इत्यादि। तन्न संभवति। अभावप्रत्ययस्सर्वोपि प्रतियोगिप्रत्ययसापेक्ष एवेति निष्प्रतियोगित्वेन अभावज्ञानाप्रसिद्ध्या 'सप्रतियोगित्वेनाभावज्ञान एव प्रतियोगिज्ञानापेक्षणात्' इति शंकैव निरवकाशा। किञ्च अभावस्य अनुपलब्धिगम्यत्वोक्तिरपि नोपपन्ना। अनुपलब्धेः पृथक्प्रमाणत्वनिरासात्। अभावस्य भावान्तरत्वस्थापनात्। प्रतियोगिनो येन प्रमाणेनावगतिः तदभावस्यापि तेनैव प्रमाणेनावगतेरुचितत्वाच्च। अभावोपि प्रत्यक्षेणैव गृह्यते अत्र घटो नास्तीति। अपि चाज्ञानस्यापि भावरूपस्य सुषुप्तौ न साक्षिवेद्यत्वं संभवति। तथासति तत्कालस्यापि तेन ग्रहणापत्तेः। नचेष्टापत्तिरिति वाच्यम्। कालग्रहणे तदुपाधेरपि ग्रहणप्रसङ्गेन जागरतौल्यापत्तेरनिवार्यत्वात्। इदं सर्वं "अज्ञानमपि तदानीतनस्मृत्यभावेनानुमीयते, तत्कालादिवत्। नहि सुषुप्तिकालोपि तदानीमेव साक्षिणा गृहीत इतीच्छसि। इष्यमाणत्वेपि कालोपाधेरपि कस्यचित् गृहीतव्यतया जागरनिर्विशेषत्वप्रसगः। तदग्रहणे पुनः 'एतावन्तं काल' मिति कालविशेषणोपादानविरोधः स्यात्" इति श्रीशतदूषण्यामाचार्यसार्वभौमैः स्पष्टमनुगृहीतम्। अतः, 'एतावन्तं कालं न किञ्चिदज्ञासिष' मित्ययं

सौषुप्तपरामर्शोऽपि सुषुप्तिकालीनज्ञानाभावविषयकानुमितिरूपत्वान्न भव-दभिमतभावाज्ञानसाधनमिति सिद्धम्॥

यदिदमत्रैव (१०१-पु) तत् त्वमसीति श्रुतेः विशिष्टाभेदविषय-तयाऽन्यथासिद्धेन तदन्यथानुपपत्त्या भावाज्ञानसिद्धिरित्याद्युक्तौ— "तदतितुच्छम्। तत् त्वमसीत्यभेदोपदेशश्च, जीवेश्वरभेदादेराविद्यकत्व-मन्तराऽनुपपन्नस्सन् तदुपपादकतया भावाज्ञानं साधयति। नच तत् त्वमसीति वाक्यं विशिष्टाभेदविषयकं शक्यमाश्रयितुम्। स्वरूपा-भेदविषयकत्वात्। तत्रैव तात्पर्यनिर्णयात्" इत्याद्युक्तम्। तदेवाति तुच्छम्। तथाहि—तत् त्वमसीत्यत्र जीवपरमात्मनो रैक्यं तावदुपदिश्यते। तत्र परमात्मनः प्रत्यक्षादिना प्रमाणान्तरेणागम्यमानत्वात् शास्त्रैकवेद्य-त्वमेव प्रामाणिकं सूत्रितं "शास्त्रयोनित्वा"दिति। तेनैव शास्त्रेण, जीवेश्वरभेदः, ईश्वरस्य चिदचिद्रूपजगद्वैलक्षण्यं, चिदचितोस्तच्छरीरत्वं, तच्छरीरकपरमात्मत एव जगदुत्पत्तिरित्यादिकं सर्वमनितरप्रमाणगम्य-मुपदिश्यते। सर्वेषां च श्रुतिवाक्यानां मुख्यार्थत्ववर्णनमेव वैदिककृत्यम्। नतु, केषाञ्चिद्वाक्यानां बाधितत्वकल्पनं युक्तम्। सति चैवं जीवेश्वरैक्यमुपदिश्यमानं कथमुपपाद्यताम्। स्वरूपैक्येन चेदुपपत्तिः क्रियेत, तदा पूर्वोक्तार्थप्रतिपादकश्रुतिवाक्यं सर्वमपि बाधितार्थमेव स्यात्। अतो भावाज्ञानपरिकल्पनमन्तरैव श्रुत्यादिप्रमाणप्रतिपन्न-शरीरशरीरिभावमादायैव तदैक्योपदेशोपपादने सर्वश्रुत्यैकरस्यं सुप्रतिष्ठितं भवतीति ऐक्योपदेशस्यान्यथैवोपपत्त्या न तदन्यथानुपपत्त्यापि भावा-ज्ञानसिद्धिः। नहि—"स्वरूपाभेदविषयकत्वात्" इति पञ्चम्यन्तपद-प्रयोगमात्रेण शास्त्राणां स्वरूपैक्यबोधनपरत्वमवगम्येत। यदि च भेदेनाबाधितप्रमाणप्रतिपन्नयोरपि स्वरूपैक्यपरत्वमुच्येत तर्हि "यजमानः प्रस्तरः, आदित्यो यूपः" इत्यादीनामपि स्वरूपैक्यपरत्वमापाद्यमान

अनिवार्यमेव स्यात्। विस्तृतं चैतत्पूर्वमेव पूर्वभागे सगुणनिर्गुण-विचारप्रकरणे ॥

ननु विशिष्टैक्यपरत्वं वक्तुं न शक्यते। किं विशेषणयोरैक्यं, उत विशिष्टयोः, आहोस्वित् विशेष्यमात्रस्य?। नाद्यः—विरोधात्। अत एव न द्वितीयः—विशेषणविशेष्यसम्बन्धात्मकस्य विशिष्टस्य विशेषणभेदेन भिन्नत्वाच्च। अतिरिक्तत्वपक्षेपि विशेषणभेदेन विशेष्यभेदेन च भिन्नत्वात्। न तृतीयः—विशेषणद्वयपरित्यागेन विशेष्यमात्रैक्यपरत्वाभ्युपगमेऽसत्पक्षप्रवेशादिति चेन्न–पूर्वमेव विशिष्टस्य जगत्कारणत्वप्रतिपादनप्रकरणे (२३–२४. पुटस्थविषयविमर्शावसरे) निरस्तत्वात्। नहि विशिष्टैक्यबोधने विशेषणयोरप्यैक्यबोधनं दृष्टचरम्। तथासति नीलो घटः इत्यादावपि तत्प्रसङ्गात्। यद्यत्र विशेषणत्वं नाङ्गीक्रियते, तदाऽनीलघटस्य वा अघटनीलस्य वा बोधापत्तिः॥

यच्चात्र (१०१-१०२–पु) तत्त्वमसीत्यत्र प्रकरणप्रस्तुतसार्वज्ञ्यादि-गुणवैशिष्ट्यसंबोध्यचेतनविशेषशरीरकत्वाभिधायकयोस्तत्त्वंपदयोर्मध्ये त्वं-शब्दस्य परमात्मपर्यन्तत्वं किं शक्त्या लक्षणया वा? जीवविषयकशक्त्यैव वेत्यादि विकल्प्य दूषणं, तदेतत्पूर्वमेव (२५–पुटस्थविषयविमर्शावसरे) निपुणं समाहितमवधेयम्। त्वंपदस्य जीवत्वं प्रवृत्तिनिमित्तमिति भवदुक्तमत्रोपहास्यम्। निष्कर्षकपदेतरसर्वशब्दानां व्याकरणश्रुत्यनुसारेण, 'वचसां वाच्यमुत्तमम्', 'वेदैश्च सर्वैरहमेव वेद्यः', 'सर्ववचसां प्रतिष्ठा यत्र शाश्वती''त्यादिप्रमाणानुगुण्येन च परमात्मपर्यन्तवाच-कत्वमेव स्वतः प्रसिद्धमिति स्थापितमेव। पदानां विशिष्टवाचकत्वं मुख्ययैव वृत्त्या, न लक्षणयेति च शास्त्रज्ञसंप्रतिपन्नम्। नात्रानेक-शक्तिप्रसङ्गलेशोपि। चराचरसत्रस्वारस्यात् विशेषणप्रयोग एवामुख्य इत्येव तत्त्वम्॥

यदत्रोच्यते (१०२–पु) "आस्तां वायमभेदमूलकः प्रयोगः। भ्रमसिद्धत्वमभेदस्य परं न सहामहे" इत्यादि—तत्र वदामः। समानाधिकरणप्रयोगस्थले सर्वत्र विशिष्टाभेदस्यैव दर्शनात्, स्वरूपमात्राभेदे समानाधिकरणप्रयोगस्यैवासंभवात् तत्त्वमसीत्यत्रापि विशिष्टाभेद एव तात्पर्यमवसीयते। नच प्रत्यभिज्ञास्थले स्वरूपाभेदे तात्पर्यमिति वाच्यम्। तत्रापि विशिष्टाभेदस्यैवाबाधितत्वेन पूर्वं स्थापितत्वात्। बाधार्थसामानाधिकरण्यं तु अचेतनांश एव भवद्भिरङ्गीक्रियते। न तु चेतनांशे। अतस्तत्पदार्थे परमात्मनि त्वंपदार्थजीवशरीरकपरमात्माभेदतात्पर्येणैवेदं तत्त्वमसीति वाक्यं प्रवृत्तमित्यवसेयम्। किञ्च—'अभेदस्य भ्रमसिद्धत्वं न सहामहे' इति भवदुक्तिस्सिद्धमेव साधयति। नहि कोपि वैदिकः भ्रमसिद्धमभेदमुपजीव्य 'तत्त्वमसी'ति वेदप्रयोग इति वदति। विशिष्टाभेदस्य प्रामाणिकत्वात्। जीवेश्वरस्वरूपाभेद एवाप्रामाणिकः प्रमाणविरुद्धश्च। देवोहं मनुष्योहमित्यादितः यथा न देहात्मनोस्स्वरूपैक्यं संभवति, तथैव जीवपरमात्मनोरपि स्वरूपैक्यं न संभवत्येव॥

यच्चोक्तं (१०२–पु) "न चेश्वरस्याज्ञानसंसारादिप्रसंगः। सर्वज्ञत्वमपि तस्याज्ञानिकं स्यादिति वाच्यम्। उपाधेः प्रतिबिम्बपक्षपातित्वात् न ब्रह्मणस्संसारित्वमिति प्रागुक्तत्वात्। जीव एवाज्ञानसंसारौ। सर्वज्ञत्वादिकं चेश्वरस्येति व्यवस्था प्रागुपपादिता" इत्यादि, — "तथाच श्रुतितात्पर्यविषयनिर्विशेषब्रह्मात्मोपलक्षणतया सर्वज्ञत्वादेरपीशनिष्ठस्य मृषात्वमिष्टमेव नः। न खलु वेदतात्पर्यविशेषानभिज्ञो वैदिको भवति। तच्च सर्वज्ञत्वं विनाज्ञानं न संभवतीति चाज्ञानं सिद्धम्। स्वतस्तस्यासङ्गत्वेन सर्वविषयसम्बन्धाभावात्" इति च—तत्सर्वं स्वोक्तिव्याघातादिना निरस्तम्। अज्ञानं

विना सर्वज्ञत्वं न संभवतीति विचित्रमिदमुच्यते। अज्ञानं चेत् कस्यचित्स्यात्, तदा स मूढ इति ह्युच्येत। नह्यभिज्ञ इति, कुतो वा सर्वज्ञ इति। यदि चाज्ञानं निवृत्त स्यात्, तदैव सोऽभिज्ञ इति सर्वज्ञ इति वा वक्तुं शक्येत। सर्वं विपरीतमुच्यते भवता। किञ्च— सर्वज्ञत्वादिकं ब्रह्मणः नोपाधिप्रयुक्तम्। स्वाभाविकमेवेति "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुति-निष्पन्नम्। तद्विपरीतं भवदुक्तम्। न खलु वेदतात्पर्यविशेषानभिज्ञः वैदिको भवेदिति सुष्ठूक्तं भवता। भवत्स्वेव तदर्थसमन्वयात्॥

अपिच चदुर्थपुटे (४-पु), "निर्गुणं ब्रह्म परमार्थतत्त्वम्। तदेवानाद्यनिर्वचनीयया अव्यक्ताज्ञानमायाद्यपरपर्याययाऽविद्यया संसरति। विद्यया च मुक्तिमुपैति" इति भवतोक्तं स्वमतनिष्कर्षावसरे। तद्विरुद्धतया, "न ब्रह्मणस्संसारित्वं, जीवस्यैवाज्ञानससारौ" इत्यादिकमिहोच्यते। अहो विरुद्धभाषणव्यसनिता। किञ्च— लोकविपरीत, नीरूपस्य चैतन्यस्य जडे प्रतिफलनमुच्यमानं कथमिव घटेत?। अतः स्वाभाविकनिखिलकल्याणगुणाकरः, हेयगुणवैदेशिकः, ईश्वराणां परमो महेश्वरः, परमात्मा परमपुरुषः श्रीमान्नारायणः स्वयमसङ्गस्वभावः स्वतस्सर्वं जानातीति न काप्यनुपपत्तिः। एवं च तत्त्वमसीत्याद्यभेदोपदेशस्यान्यथासिद्धत्वात् न तदन्यथानुपपत्त्यापि भावाज्ञानकल्पनावकाश इति स्थितम्॥

यदुक्तं (१०२-पु) "स्वप्रकाशचिन्मात्रब्रह्मजिज्ञासोपदेशान्य-थानुपपत्त्या अज्ञानं कल्प्यते। स्वत एवापरोक्षे जिज्ञासाद्ययोगात्। न खलु बन्धस्य सत्यत्वे ज्ञानैकनिवर्त्यत्वं भवेत्। क्वापि तदज्ञानानु-पादानस्य तज्ज्ञानमात्रनिवर्त्यत्वादर्शनात्। पापादेश्च नियमविशेष-विशिष्टसेतुदर्शननिवर्त्यत्वेन तन्मात्रनिवर्त्यत्वाभावात्। ज्ञानं बन्धध्वंसे

नान्यत्किञ्चिदपेक्षते। श्रवणादेरपि ज्ञानोत्पत्तावेवोपयोगात्। एवं च बन्धस्य ज्ञानमात्रनिवर्त्यत्वोपपादनाय मिथ्याज्ञानोपादानत्वमवश्यं कल्पनीयम्" इति। तत्सर्वं प्रमाणविरुद्धं, स्वोक्तिविरुद्धं, अनुपपन्नं च। स्वत एवापरोक्षे जिज्ञासायोगादज्ञानं कल्प्यते चेत् तत्कल्पनात्तस्य स्वत आपरोक्ष्यमपैति वा न वा? आद्ये— अपसिद्धान्तः। अन्त्ये च—जिज्ञासाऽयोगतादवस्थ्यम्। जिज्ञास्य-ब्रह्मणो भवन्मते सगुणनिर्गुणभावविकल्पदौस्थ्यादिकं श्रीशतदूषण्यादौ विपुलमुपपादितम्। बन्धस्य ज्ञानमात्रनिवर्त्यत्वं सिद्धं चेन्मिथ्यात्वं सिद्ध्येत्। तस्य मिथ्यात्वे सिद्धे ज्ञानमात्रनिवर्त्यत्वसिद्धिरिति मिथस्संश्रयश्च। किञ्च—श्रुतिषु सूत्रेषु चोपासनस्यैव मोक्षोपायत्व श्रवणात् बन्धस्य सत्यत्वमेव। अपि चाज्ञानानुपादानस्य ज्ञानमात्रनिवर्त्यत्वादर्शनोक्तिरदर्शनमूलैव। अज्ञानोपादानकत्वरूप प्रमेयस्यैव दुस्स्थत्वात्। सुस्थत्वेपि तदज्ञानानुपादानस्यापि तज्ज्ञान-मात्रनिवर्त्यत्व दृश्यत एव। सेतुदर्शनस्थले नियमविशेषसापेक्षन्वाङ्गी कारेपि, "दर्शनादेव साधवः", "दृष्ट एव हि नश्शोकमपनेष्यति राघवः" इत्यादौ नियमविशेषविधानादर्शनात् एवकारेणान्यनैरपेक्ष्य-कथनाच्च। 'ज्ञानं च बन्धध्वंसे नान्यत्किञ्चिदपेक्षते' इत्यप्यसङ्गतम्। बन्धनिवर्तने विषयसत्यत्वसापेक्षत्वस्य भवतैवाभ्युपगमात्। ६३-पुटे-"नहि ज्ञानस्य स्वरूपसत्त्वं निवर्तकत्वे प्रयोजकम्। भ्रमस्यापि बाधकत्वप्रसङ्गात्। किन्तु विषयसत्यत्वमेव। तच्च प्रकृतेऽव्याहतम्" इति ह्युक्तं भवता। एवं च ब्रह्मजिज्ञासोपदेशस्याप्यन्यथासिद्ध्या न भावाज्ञानकल्पनाऽवकाशः॥

यदुक्तं (१०३-पु) "मोक्षस्य उपासनासाध्यत्वं न संभवति। अनित्यत्वप्रसङ्गात्। यत् क्रियासाध्यं, तदनित्यमिति व्याप्तेः। उपासनं

च कर्मेति तान्त्रिकस्यापि संप्रतिपन्नम्। अत एव, "प्रकाशश्च कर्मण्यभ्यासात्" इत्यत्र 'उपासनात्मके कर्मणी'ति परकीयं भाष्यम्। "उपासनस्य कर्मत्वं सन्ततिरूपतया प्रयत्नसाध्यत्वात्" इति तद्व्याख्यानं च।" इत्यादि—तदपि न। दर्शनसमानाकार-निरन्तरस्मृतिसन्ततिरूपज्ञानविशेषोपासनासाध्यस्य निश्शेषकर्मक्षयरूपस्य मोक्षस्यानित्यत्वापादने ब्रह्मसाक्षात्कारजन्याविद्यानिवृत्तिरूपमोक्षस्यापि तदापादनतौल्यात्। नच ज्ञानजन्यस्यानित्यत्वापत्तिर्न युज्यते। कर्मजन्यस्यैव तदापत्तिरिति वाच्यम्। उपासनस्यापि ज्ञानविशेषत्वात् अकर्मत्वात् तज्जन्यसर्वकर्मक्षयरूपमोक्षस्याप्यनित्यत्वप्रसङ्गाभावात्। न चोपासनं कर्मेति तान्त्रिकसंप्रतिपन्नमिति वाच्यम्। नाभिप्ररूढतन्त्र-प्रद्वेषमूलान्ध्यनिबिडतया भवदुपात्तकर्मण्यभ्याससूत्रभाष्यतद्व्याख्यान-भावानवगतेः। तत्र व्याख्याने, "सन्ततिरूपतया प्रयत्नसाध्यत्वात् उपासनस्य कर्मत्व"मिति ह्युक्तम्। न तु कर्मरूपत्वं तत्रोक्तम्। तथाचाविधेयज्ञानं न मोक्षसाधनम्। अपि तु विधेयमेव तत् मोक्षहेतुरिति तद्भावः। वस्तुतस्तु निष्कामकर्मणोऽनन्तस्थिरफलत्वं श्रुतिस्मृत्यादिषु मुक्तकण्ठमुच्यत इत्यवधेयम्॥

यदत्रैव (१०३—पु) "नच कर्मक्षयस्योपासनासाध्यत्वेपि नानित्यत्वम्। अन्यथा प्रायश्चित्तक्रियासाध्यपापक्षयस्याप्यनित्यत्वे प्राप्ते पुनरपि पापोत्पत्तिप्रसङ्गेन सततं प्रायश्चित्तकरणापत्तेरिति वाच्यम्। यदि कर्मक्षयः कर्मोपादानावस्थान्तरमिति स्वीक्रियते, तर्हि क्रियाजन्यस्य कर्मक्षयस्य न नित्यत्वं वक्तुं शक्यते। क्रियाजन्यायाः घटादिध्वंसरूपकपालावस्थाया अनित्यत्वस्यैव दर्शनात्। भवन्मते कर्मणः आत्मैवोपादानमिति तत्क्षयरूपात्मावस्थान्तरं यदि क्रियासाध्य-मुच्येत, तर्हि विक्रियापत्तेरात्मनो विकारित्वानित्यत्वादि प्रसङ्गस्स्यात्।

अथ कर्मक्षयोऽर्थान्तरमेवेत्युच्यते, तदा तस्य घटादिवदनित्यत्वं दुर्वारम्। आत्मातिरिक्तस्य कर्मक्षयस्य नित्यत्वानुपपत्तेः" इत्यादि। तत्सर्वमस्मत्सिद्धान्तानवगतिविपरीतावगत्यादिमूलमेव। उपासनाजन्यः कर्मक्षय इत्यत्र कर्मपदं पुण्यपापरूपकर्मपरम्। तत्र क्रियात्मकस्य तत्कर्मणः अनुष्ठानवेलायामेव नाशात् न तत्रोपासनापेक्षा। कर्मोपादानमित्यादि त्वदुक्तमपि बाधितं स्यात्। नहि क्रियाया उपादानापेक्षा। द्रव्यविषय एवोपादानप्रश्नावकाशः। तथाच क्रियात्मकतादृशकर्मजन्य-अधिकारिविषयक-भगवन्निष्ठप्रीतिकोपादिरूप एवात्र कर्मशब्दार्थो वक्तव्यः। प्रीतिकोपत्वादिकं तु भगवदीयधर्मभूतज्ञानावस्थान्तरमेव। अधिकार्यनुष्ठितोपासनया तदवस्थानाश एव कर्मक्षय इत्युच्यते। अनादिकर्मसापेक्षायास्तादृशावस्थायाः निश्शेषक्षये सति कथं वा पुनस्तादृशप्रीतिकोपावस्थोत्पत्तिप्रसङ्गः?। कथं वा तादृशकर्मक्षयानित्यत्वशंका?। घटादिध्वंसरूपकपालावस्थायाः अनित्यत्वे न क्रियाजन्यत्वं हेतुः। सिद्धसाधनात्। क्रियाजन्यत्वे पूर्वावधिसत्त्वेन पूर्वोत्तरकालावधिशून्यत्वाभावरूपानित्यत्वस्यापि सिद्धत्वात्। ध्वंसस्य नित्यत्वं नहि त्वयाऽङ्गीक्रियते। "भवन्मते कर्मणः आत्मोपादानत्व" मिति भवदुक्तिरुपहास्येत्युक्तमेव। अत आत्मनो विक्रियत्वाद्यापत्तिर्निरस्ता। 'आत्मातिरिक्तस्य कर्मक्षयस्य नित्यत्वानुपपत्ते'रिति चानुपपन्नम्। श्रुतिबाधात्। आत्मान्यप्रकृतेर्नित्यत्वश्रवणात्। एवं च प्रायश्चित्तजन्यायाः पापनिवृत्तेरिव उपासनारूपज्ञानविशेषजन्यसर्वकर्मनिवृत्तेरपि नित्यत्वसंभवात् नानुपपत्तिः। नच—उत्तरावधिशून्यत्वमात्रं न नित्यत्वं, पूर्वावधिशून्यत्वमपि तदिति कर्मक्षयरूपमोक्षस्य गौणमेव नित्यत्वमिति वाच्यम्। तथाङ्गीकारे प्रमाणाभावात्। ध्वंसस्य गौणनित्यत्वं नहि प्रमाणप्रतिपन्नम्। ध्वस्तस्य पुनरुन्मज्जनाभावात् तद्ध्वंसस्य मुख्यमेव नित्यत्वं लोकप्रसिद्धम्।

नहि लोके ध्वंसोऽनित्य इति प्रसिद्धिः। किञ्च घटसामग्र्यां सत्यां प्रथमोत्पन्नघटनाशे जाते पुनरपि नष्टस्यैव तस्य घटस्योत्पत्त्यापत्तौ तद्धटध्वंसनित्यत्वमेव तत्र प्रतिबन्धकमिति वक्तव्यम्। नच अवस्थान्तरध्वंसवादेऽवस्थान्तरस्यैव प्रतिबन्धकत्वं सुवचमिति वाच्यम्। तथापि ध्वस्तघटस्य पुनरुन्मज्जनासंभव इव प्रकृते सर्वकर्मक्षयस्य उक्तावस्थान्तरप्रतिबन्धकसत्त्वेन पुनरुन्मज्जनासंभव एवेति तत्कर्मक्षयनित्यत्वस्यैव फलितत्वात्। भगवदीयधर्मभूतज्ञानावस्थाविशेष एव हि कर्मक्षय इति पूर्वमुक्तम्। तादृशावस्थाविशेषस्य मोक्षपुरुषार्थप्रदानसङ्कल्परूपतया तस्य च नित्यत्वेन सर्वकर्मक्षयनित्यत्वे विरोधाभावात्। पूर्वावधिशून्यत्वमपि नित्यत्वशरीरप्रविष्टमित्यत्र नियामकं नास्ति। तत्सत्त्वेपि गौणमपि वा नित्यत्वमेवाङ्गीकृतं स्यात्। सर्वात्मनाऽनित्यत्वमत्रासंभावनीयम्॥

यच्चोक्तमत्रैव (१०३-पु) "नचैवं ज्ञानजन्यस्याज्ञानध्वंसस्याप्यनित्यत्वं दुर्वारमिति वाच्यम्। ज्ञानेनाज्ञानध्वंसानङ्गीकारात्। किन्तु अज्ञानस्य बाध एव" इत्यादि। तदसङ्गतम्। बाधाङ्गीकारेप्यनित्यत्वापत्तेर्दुर्वारत्वात्। प्रतिपन्नस्य नेति निषेधो हि बाधः। ईदृशश्चाज्ञानबाधः ज्ञानजन्य एव, न पूर्वमवतिष्ठत इति अनित्यत्वमेव हि फलति। ततश्चोपासनाजन्य एव मोक्षः परमः। नत्वविधेयज्ञानजन्यः। उपासनाया एव परममुक्त्युपायत्वश्रवणात्। "अथ योऽन्यां देवतामुपास्ते अन्योसावन्योऽहमस्मीति न स वेद, अकृत्स्नो ह्येषः। आत्मेत्येवोपासीत" इत्यादयः श्रुतयोऽत्र भाव्याः। नच—'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिश्रुतिषु ज्ञानस्यैव मोक्षोपायत्वं श्रूयत इति वाच्यम्। "द्रष्टव्यः निदिध्यासितव्यः" इत्यादिविरोधात्। अतो यत्र 'विदित्वा' इत्यादिरीत्या सामान्यरूपेण ज्ञानं विधीयते,

तत्र सर्वत्र ज्ञानविशेषरूपोपासनार्थत्वमेवाङ्गीकार्यम्। एवं चोपासनाया एवोक्तप्रकारेण मोक्षोपायत्वे सिद्धे बन्धस्य सत्यत्वावगमेन मोक्षोपदेशसार्थक्यसंभवेन च न तदन्यथानुपपत्त्यापि भावाज्ञानसिद्धिरिति निष्पन्नम् ॥

एवं जगत्कारणत्वान्यथानुपपत्तिरपि न तत्र मानम्। शुद्धब्रह्मणः जगदुत्पत्तिर्न संभवतीति ह्यज्ञानकल्पनं भवताम्। नहि तथा कुत्रापि केनाप्युच्यते। विशिष्टादेव ब्रह्मणो जगदुत्पत्तिं वदामः। तर्ह्यज्ञानविशिष्टादित्यस्मदुक्तौ कः प्रद्वेष इति चेदुच्यते। नास्माकं भवदुक्तौ प्रद्वेषः। भवतामेव भेदश्रुतिषु प्रद्वेषः। ततस्सर्वापलापं कृत्वा ब्रह्मैकमेवास्तीति परिकल्प्य, अबद्धं कृत्वा कुचोद्यं करोतीति न्यायेन शुद्धब्रह्मणो जगदुत्पत्तिर्न संभवतीति निष्प्रमाणं केवलं स्वकपोलमात्रसिद्धमज्ञानं जगदुत्पत्तिप्रतिपादकतया कल्प्यते भवद्भिः। को वा वैदिकः एतदनुमन्येत। श्रुत्यैव किंविशिष्टात् ब्रह्मणो जगदुत्पत्तिरिति स्पष्टं प्रतिपाद्यते। नास्माकं तत्र कल्पनापेक्षा। "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत", "सन्मूलास्सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः", "यः पृथिव्यां तिष्ठन्", "य आत्मनि तिष्ठन्", "सोभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्यादिश्रुतिस्मृत्यादिप्रमाणशतमिहानुसन्धेयम्। "नेह नानास्ति किञ्चन" इत्यादिवचनजातं च, "ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद", "न तदस्ति विना यत्स्यात् मया भूतं चराचरम्" इत्यादिश्रुतिस्मृत्यादिप्रमाणैरेव स्वतन्त्रवस्तुनिषेधपरतया व्याख्यातम्। इदं सर्वं पूर्वमेव प्रथमभागेऽस्माभिस्सुविशदमुपपादितम्। तथाच जगत्कारणत्वमप्यन्यथैवोपपन्नमिति न तदन्यथासिद्ध्यापि भवदीयभावाज्ञानसिद्धिरिति फलितम्। तदेवं प्रत्यक्षानुमानश्रुतितदर्थापत्तिस्मृतीतिहासादिषु प्रमाणेषु न केनापि भावाज्ञानसिद्धिरिति तस्य

प्रमाणानवगतत्वोक्तिः शास्त्रतात्पर्याभिज्ञतामूलैवेति वैदिकैस्सर्वैरादरणीयै-वेति सिद्धम् ॥

एतेन, "भावाज्ञानस्य प्रमाणानवगतत्ववचनं शास्त्रतात्पर्यापर्यालोचनमूलमिति वैदिकैरुपेक्षणीयमेवे"ति (१०४-पु) भवदुक्तं, 'प्रमाणाऽवगतत्ववचन'मिति शोधितं सत् भवत्स्वेवाबाधितार्थं भवतीति स्पष्टं विमत्सरविश्वविदुषाम् ॥

इत्थं प्रमाणलेशस्याप्यसिद्धेः सुनिरूपणात् ।
प्रमाणानुपपत्तिस्सा कथिताऽत्र दुरुद्धरा ॥

॥ इति पञ्चमः परिच्छेदः ॥

## ॥ षष्ठः परिच्छेदः—निवर्तकनिवृत्त्यनुपपत्ती ॥ (६)

१. नाविद्याया निर्विशेषब्रह्मज्ञानं निवर्तकम् ।
निर्विशेषस्याप्रसिद्ध्या तज्ज्ञानस्याप्यसंभवात् ॥

२. वृत्त्यवच्छिन्नचैतन्यमपि नो तन्निवर्तकम् ।
स्वरूपज्ञानसाम्यात्, तन्मिथ्यात्वात्तन्निवर्तने ॥

३. निवर्तकान्तरापेक्षयाऽनवस्थाप्रसङ्गतः ।
उपक्रमादितात्पर्यलिङ्गषट्कानुकूलता ॥

४. सविशेषब्रह्मवादस्यैव, नास्तीतरस्य तु ।
नात्र स्वपरनिर्वाहकत्वं स्यात्, विषमत्वतः ॥

५. नैव प्रसक्तः कतकन्यायोऽत्रेत्यनवस्थितिः ।
तदवस्थेति षष्ठ्येषाऽनुपपत्तिर्दुरुद्धरा ॥

६. सत्यत्वात् बन्धतद्धेत्वविद्ययोः ज्ञानमात्रतः ।
निवृत्तिर्नैवोपपन्ना, मिथ्यात्वं नानयोः श्रुतम् ॥

७. उपासनाविनाश्यत्वमेव हि श्रुतिसंमतम्।
किञ्चेयं तन्निवृत्तिश्चेदतिरिक्ताऽऽत्मतस्तदा ।।

८. अस्याश्च मिथ्याभूतायाः निवृत्तेः स्वनिवृत्तये।
निवर्तकान्तरापेक्षानैयत्यादनवस्थितिः।।

९. आत्मतोऽनतिरेके च नानाकल्पविकल्पनात्।
विरोधोऽद्वैतहानिर्वाऽनिर्मोक्षो वाऽनवस्थितिः ।।

१०. दोषः स्यादित्यविद्यायाः निवृत्तिर्नोपपद्यते।
सप्तम्यनुपपत्तिस्साप्येवमत्र निरूप्यते।।

११. षष्ठेऽत्रैवं परिच्छेदे चाविद्यायाः प्रमाणतः।
निवर्तकनिवर्त्यत्वे नोपपन्न इतीर्यते।।

निर्विशेषज्ञानं बन्धनिवर्तकमिति परे। तन्न संभवति। निर्विशेषवस्तुन एवाप्रामाणिकत्वात्। सर्वत्र श्रुत्यादिप्रमाणेषु सविशेष ब्रह्मज्ञानस्यैव बन्धनिवर्तकतयोपदेशात्। "आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति" इत्यादि हि वाक्यजातं सगुणब्रह्मज्ञानमेव साक्षान्मोक्षसाधनमवगमयति। निर्विशेषं वस्तु शशविषाणतुल्यमेव। "निष्कलं निष्क्रियं शान्तं" इत्याद्यपि यदि ब्रह्मविषयकं न भवेत्, तदा कस्य क्रियाराहित्यमवगमयेत्। अतो ब्रह्मविषयकमेवाभ्युपगन्तव्यम्। तथाचेदशवाक्यविषयत्वमन्ततोऽवर्जनीयमेवेति सविशेषमेवायातम्। "फलमत उपपत्तेः" इत्यादिना सर्वफलप्रदत्वं भगवतस्सगुणस्यैवेति सौत्रस्सिद्धान्तः। भवन्तस्तु तद्विरोधेन सगुणवाक्यस्य फलान्तर प्रतिपादकत्व, निर्गुणवाक्यस्यैव मुक्तिफलोपपादकत्वमिति वदन्ति। "निर्गुणस्यैव तात्त्विकत्वेनाधिष्ठानत्वमिति तदवगाहिनिर्गुणज्ञानस्य अधिष्ठानतत्त्वानवगाहिसगुणज्ञानात् विशेषोपपत्तेः" इतीयं परिपाटी

सर्वप्रमाणविरुद्धेति स्थापितमेव। सर्वत्र व्याहतमेव भाषन्ते भवन्तः। निर्गुणस्य ज्ञेयत्वं नास्तीति भवत्सिद्धान्तः। अत्र तु भवता "तदवगाहिनिर्गुणज्ञानस्ये"ति लिख्यते। कथमिदमविरुद्धम्। "सगुणजन्यमुक्तेरवान्तरमुक्तित्वोपगमाच्चे"त्यत्र पञ्चम्यन्तपदप्रयोगेन परं अवान्तरमुक्तित्वं न सिद्ध्येत्। कुत्र केनोपगम्यते?। भवद्भिरुपगम्यते चेत्तदेव किं प्रामाणिकम्?। "आत्मेत्येवोपासीते"ति परममुक्त्युपायत्वमुपासनस्यैवेति श्रुत्या प्रमिते सति भवत्सिद्धान्तस्सर्वोपि श्रुत्यादिसर्वप्रमाणवैदेशिक इति न विशिष्य वक्तव्यमवशिष्यते॥

यदत्र लिख्यते (१०४-पु) 'आदित्यवर्ण'मित्यादिश्रुतीनां जडविलक्षणस्वप्रकाशस्वरूपप्रतिपादनपरतया, उपास्यपरतया वोपपन्नत्वात्। नच तमसःपरत्वं उपास्यपरत्वे बाधकमिति वाच्यम्। उपलक्षितस्य तमसःपरत्वं, नतु विशिष्टस्ये"त्यादि—तदसारम्। स्वरूपपरतया वा उपास्यपरतया वेति पक्षद्वयमत्रोपात्तम्। पक्षद्वयेपि न निर्गुणसिद्धिः। पूर्वं सहस्रशीर्षत्वादिविशिष्टः प्रस्तुतः। तस्यैव परमपुरुषस्य अन्तर्यामितया सर्वव्याप्तिः अत एव सर्ववस्तुसामानाधिकरण्यार्हत्वं, सर्वजगत्कारणत्वमित्यादिकमुपदिश्यते च। तस्यैवात्रादित्यवर्णत्वं तमः-परत्वमित्यादिकमुच्यते। सत्येवं कथमत्र निर्गुणप्रसक्तिः?। वस्तुतस्तु आदित्यवर्णत्वं दिव्यमङ्गलविग्रहवैशिष्ट्य एवेति तत्त्वम्। न जडव्यावृत्तस्वप्रकाशस्वरूपमात्रपरत्वमत्राभिप्रेतम्। "तमेवं विद्वानमृत इह भवति" इत्यत्र वेदनमुपासनमेवेति सर्ववाक्यैककण्ठ्यादभ्युपगमनीयमिति पूर्वं साधितमेव। उपास्यपरत्वे विशेषाणां मिथ्यात्वमित्यप्रामाणिकम्। गुणोपसंहारपादवैयर्थ्यापत्तेश्च। उपलक्षणविशेषणभेदकल्पनं केवलस्वकपोलकृतम्। सगुणवाक्यप्रतिपाद्यसत्यकामत्वादीनां विशेषणत्वे किं बाधकम्?। येन तदुपलक्षितनिर्विशेषात्मज्ञानस्यैव परममुक्त्युपायत्व-

मित्युच्यते। "तमेवं विद्वानमृतः" इत्युक्ते क्रममुक्तिकथनमित्यध्य-सङ्गतम्। तथाऽनुक्तेः॥

श्रीभाष्ये, पूर्वोत्तरप्रकरणपरामर्शपूर्वकं श्रुतीनां विशिष्टाद्वैत एव परमतात्पर्यमिति सप्रमाणं सयुक्तिकं च विस्तरेणोपपादितम्। "तत् प्रागेव निरस्तम्। . खण्डितम्" इत्यादि यदत्र भवता लिख्यते—तत्र तत्त्वं वदामः। मूषिकादिरूपेण खण्डनं कदाचित् सुशकं स्यात्। नतु विषयतः। तदेतत्पूर्वभागे निरूपितमस्माभिः॥

किञ्च—अविद्यानिवर्तकात्मतत्त्वज्ञान मिथ्याभूतमिति तन्निवर्त-कान्तरापेक्षायामनवस्था। स्वस्यैव चेत्स्वनिवर्तकत्वं, तदा तन्निवृत्तिः किं ब्रह्मस्वरूपा, उतातिरिक्ता। आद्ये—निवृत्तेः प्रतियोगिविरुद्धत्वात् प्रतियोगिभूतनिवर्तकज्ञानमेव नोत्पद्येत। नहि घटनाशे सति तत्प्रतियोग्युत्पत्तिर्दृष्टा। अन्त्ये—ब्रह्मव्यतिरिक्तत्वेन तस्या अपि मिथ्यात्वेन तन्निवर्तकान्तरापेक्षेति अनवस्थातादवस्थ्यमेव॥

अत्र यत्प्रतिविवक्षितं—(१०५-पु) "चरमवृत्त्युपलक्षितात्मरूप-त्वमविद्यानिवृत्तेरभ्युपगच्छामः। चरमसाक्षात्कारपूर्वकाले चात्मनोऽज्ञान-निवृत्तिरूपत्वाभावेन सत्यां साक्षात्कारसामग्र्यां साक्षात्कारोत्पत्तौ विरोधप्रसक्तेरभावात्" इत्यादि। तत्रोच्यते। उत्तरावधिशून्याया अविद्यानिवृत्तेश्चरमवृत्त्युपलक्षितात्मरूपत्वाङ्गीकारे चरमवृत्त्युपलक्षितत्वस्यापि यावदात्मभावित्वावश्यंभावेन, तादृशोपलक्षितत्वस्य सत्यत्वेऽद्वैतहानिः। मिथ्यात्वेऽनिर्मोक्षप्रसङ्गः। तन्निवर्तकान्तरापेक्षायामनवस्थातादवस्थ्यं च स्यात्। किञ्च—निवृत्तिरूपत्वाङ्गीकारे आत्मनः घटादिध्वंसस्येव नाशप्रतीतिविषयत्वमप्यापद्येत। न चेष्टापत्तिः—नहि 'घटो नष्टः' इति घटध्वंसस्येव आत्मनः अविद्या निवृत्तेति प्रतीतिविषयत्वं

दृष्टचरम्। 'प्रपञ्चोपशमः' इत्यादिकं तु नात्मनो निवृत्तिरूपत्वप्रमापकम्। प्रपञ्चशब्दस्वारस्यात् कार्यवर्गप्रलयावस्थब्रह्मपरत्वमेवोचितम्। मूलप्रकृतेर्विनाशासंभवात्। ईदृशावस्थावैशिष्ट्यमपि न भवदभिमतनिर्गुणात्मनः शक्योपपादनम्। किञ्च अविद्यानिवृत्तिर्मोक्ष इति भवदभिमतिः। चरमवृत्त्युपलक्षितात्मरूपाविद्यानिवृत्तौ चरमवृत्त्युपलक्षितत्वस्यैव प्राप्ताप्राप्तविवेकेन ज्ञानसाध्यत्वपर्यवसानात् तादृशोपलक्षितत्वस्य सत्यत्वे अपसिद्धान्तात् मिथ्यात्वस्यैवाङ्गीकार्यतया वेदान्तजन्यसाक्षात्कारेणाऽऽविद्यकं चरमवृत्त्युपलक्षितत्वमेवात्मनस्संपादितं स्यात्। नतु मोक्षः। चरमवृत्त्युपलक्षितत्वमपि किं चरमवृत्तिरेव, उत चरमवृत्तिनिवृत्त्यादि। आद्ये — मोक्षस्यानित्यता। अन्त्ये — निवृत्तेर्ब्रह्मरूपतेति कथं तदुपलक्षितत्वं तस्यैवेत्यलम्॥

एतेन—"मुक्तौ च सर्वव्यवहारातिपातिन्यां प्रकाशानन्दसत्तामात्रमवभासते। न त्वनर्थनिवृत्तिरूपतया" इत्यादिकं निरस्तम्। चरमसाक्षात्कारेणाविद्यानिवृत्तौ जातायां तस्याश्चोक्तात्मरूपत्वे तादृशात्मप्रकाशस्य मुक्ताववश्यंभावेन निवृत्तिरूपतयैव प्रकाशापत्तेरनिवार्यत्वात्॥

यदुक्तमत्रैव (१०५-पु) "नचाविद्यानिवृत्तेरात्मरूपत्वे तस्य प्रागेव सिद्धत्वात् न ज्ञानसाध्यत्वमिति वाच्यम्। यस्मिन् सति अग्रिमक्षणे यस्य सत्त्वं, यस्मिन्नसति चासत्त्वं, तत्साध्यमिति साधनादिसाधारणसाध्यलक्षणस्य संभवेनाविद्यानिवृत्तेर्ज्ञानसाध्यत्वसंभवात् न ज्ञानानर्थक्य"मित्यादि। तदसंभवि। आशंका तावदत्र कथं घटते?। नहि पूर्वं केवलात्मरूपत्वमविद्यानिवृत्तेरुक्तं भवता। येनेयमाशंकोदियात्। अपितु चरमवृत्त्युपलक्षितस्यैव हि तस्याविद्यानिवृत्तिरूपत्वमुक्तम्। तस्य प्रागेव सिद्धत्वं नास्तीति इयमाशंका न

घटते। उत्तरं चानुपपन्नम्। सादिवस्तुविषये भवदुक्तसाध्यत्वसंभवेपि अनादिविषये बाधितं हि साध्यत्वम्। यत्सत्त्वे यत्सत्त्वमित्यादेर्जन्य जनकभावमन्तरा प्रयोज्यप्रयोजकभावमादायोपपादयितुमशक्यत्वात्। प्रयोज्यप्रयोजकभावाभिप्राये तत्त्वसाक्षात्कारप्रयोज्यत्वं चरमवृत्तेर्वा तदुपलक्षितात्मनो वा स्यात्। तदसङ्गतम्। अविद्याप्रयोज्याया वृत्तेः साक्षात्कारस्य साक्षात्काराप्रयोज्यत्वात्। तदुपलक्षितत्वमपि ब्रह्मव्यतिरिक्तत्वे आविद्यकत्वेन साक्षात्काराप्रयोज्यमेव। तदनतिरेके च तस्यापि पूर्वसिद्धत्वेन तदप्रयोज्यत्वमेव। अनादेस्त्वात्मनः सुतरां न साक्षात्कारप्रयोज्यत्वमिति, "यस्मिन् सत्यग्रिमक्षणे" इत्यादिकं न संभवत्येव। नचाविद्यानिवृत्तेर्ज्ञानप्रयोज्यत्वमस्त्येवेति वाच्यम्। आत्मरूपत्वस्यैवाविद्यानिवृत्तौ बाधितत्वात्। चरमवृत्त्युपलक्षितत्वमात्मानं चान्तरा तृतीयस्य तदुपलक्षितात्मनोऽभावात्। तदुभयस्य तु तन्निवृत्तिरूपत्वासंभव उपपादित एव। यदभावे यदभाव इति नित्यात्मविषये व्यतिरेकप्रदर्शनमप्यसङ्गतम्। नच 'नास्त्यात्मे'ति भ्रमसिद्धतदभावमादाय तत्प्रदर्शनं सुशकमिति वाच्यम्। विकल्पासहत्वात्। 'आत्मा नास्ती'त्यत्र किं केवलात्मा विषयः, उत शबलितः?। आद्ये—भ्रमानुपपत्तिः। तस्याऽधिष्ठानत्वात्। न ह्यधिष्ठानाभावविषयकः भ्रमो दृष्टचरः। इदं नास्तीति प्रतीतेरभावात्। द्वितीये च—व्याप्तिप्रदर्शनवैयर्थ्यमेव। अन्वयव्याप्तौ यादृश आत्मा गृह्यते, तदभाव एव हि व्यतिरेकप्रदर्शनेपि ग्राह्यः। प्रकृते च शबलितात्मनो नान्वये प्रदर्शनं युक्तम्। तस्याविद्यकत्वेन साक्षात्कारानधीनत्वात्। अत इदं व्याप्तिप्रदर्शनमेवासङ्गतम्॥

यदत्रोक्तं (१०५-पु) "नाश्यनाशकयोः सकार्याविद्यातत्त्वसाक्षात्कारयोः सममेव तत्त्वसाक्षात्कारेण नाशः। न क्रमिकः।"

इत्यादि। तदपि न। स्वेनैव स्वस्य नाशासंभवात्। किञ्च लोके भ्रमस्यैव सकार्यस्य तत्त्वज्ञानतो बाधो दृश्यते। नतु सफलप्रवृत्तिजनकप्रमात्मकज्ञानस्य। न ह्यापणस्थरजतज्ञानं बाध्यते। सति चैवं अविद्यानिवर्तकत्वेनाभिमततत्त्वसाक्षात्कारस्य प्रमात्मकत्वावश्यंभावेन कथं तस्य ज्ञानबाध्यत्वं स्यात्। ज्ञानेतरबाध्यत्वोक्तौ तु जगत्सत्यत्वापत्तिरनिवार्या। "अविद्यादिनाश इव तत्त्वज्ञाननाशोपि आत्मरूप इत्येतदपि निरस्तप्रायम्। केवलात्मरूपत्वं वा विशिष्टात्मरूपत्वं वा तत्त्वज्ञाननाशस्येत्यादिविकल्पतद्दूषणानां जागरूकत्वात्। "कर्मनाशवादिनः परस्यापि नाशस्यावस्थान्तरत्वाभ्युपगमात्समानोऽयं प्रश्नः" इत्यादिकं यदत्र (१०५-पु) उक्तं, तदप्यसङ्गतम्। परमतस्वमतविवेकविरहप्रयुक्तत्वात् भवद्वादस्य। कर्मनाशवादिनो वयं हि आत्मधर्मभूतज्ञानवादिनः। तस्य च धर्मभूतज्ञानस्याऽऽगन्तुकावस्थाविशेषवत्त्वं चाभ्युपगच्छामो यथाप्रमाणम्। अतो वयं कर्मनाशमवस्थान्तरं वक्तुं प्रभवामः। न यूयम्। भवन्मते निर्गुणत्वात् ब्रह्मणः। अतो न समानोऽयं प्रश्न इति जानातु भवान्॥

यच्चोक्तं (१०६-पु) "भगवत्प्रीतिकोपात्मककर्मनाशवादे कादाचित्कधर्मवतो भगवतो विकारित्वनैर्घृण्यादिदोषप्रसङ्गः। श्रुति जनितात्मतत्त्वज्ञानस्य साक्षान्मोक्षकारणत्वानुपपत्तिश्च। भगवत्सङ्कल्पेन व्यवधानप्रसङ्गात्" इत्यादिकम्। तदप्ययुक्तम्। भगवद्धर्मभूतज्ञानस्याकादाचित्कत्वात्। तच्च धर्मभूतज्ञानं "बहु स्यां प्रजायेयेति" इत्यादिश्रुत्यानुगुण्येन परिणामस्वभावं प्राणिवर्गकृतकर्मानुगुणं परिणामं भजत इति हि तत्त्वम्। "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि" "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इत्याद्युक्तरीत्या वैषम्यादिदोषाप्रसक्तेः। एतेन भगवतो विकारित्वापत्तिर्निर्मूलेति सिद्धम्। "धातुः

प्रसादात" इत्यादिश्रुतिप्रतिपन्नत्वात् न व्यवधानदोषोपि। नहि व्यापारेण व्यापारिणोऽन्यथासिद्धिः। अन्यथा मुसलस्यापि व्रीह्यवहनन साधनत्वमुद्यमननिपतनद्वारकमित्येतदप्यनुपपन्नं स्यादिति मुसलेन व्रीहीनवहन्यादिति वाक्य बाधितं गृह्णीयात् कश्चिन्मुसलकिसलयबुद्धिः। अतो नास्मन्मते काचिदनुपपत्तिः॥

"निवर्तकज्ञानस्याश्रयो न संभवति। निवर्तकज्ञाननिषेध्यस्य जीवस्य निषेधकर्मत्वात् न तदाश्रयत्वसंभवः। ब्रह्मापि न तदाश्रयः। निर्विशेषस्य तस्य ज्ञानाश्रयत्वरूपज्ञातृत्वायोगात्। ज्ञातृत्वं तस्याध्यस्त-मिति तु सत्यमिथ्यात्वविकल्पदूषितमेव। किञ्च — निवर्तकं च ज्ञानं ज्ञाता च निवर्त्यान्तर्गतमित्यप्यसङ्गतम्। नहि देवदत्तः भूतलव्यतिरिक्तं सर्वं छिनत्तीत्यत्र छेत्तुर्देवदत्तस्य छेदनक्रियायाश्च छेद्यान्तर्गत त्वमनुन्मत्तो ब्रूयात्। अपि च स्वनाशहेतुभूतज्ञानकर्ता न कोपि स्यात्। कस्यापि स्वनाशकज्ञाने प्रवृत्त्ययोगात्" इत्येतत्प्रतिविवक्षया— यदुक्तं (१०६-पु) "एकस्यैवाहमर्थस्य ज्ञातुरुपधेयरूपभेदेन कर्तृकर्मभावो न विरुद्ध्यते। तदुपाधिरूपान्तःकरणादेर्निवर्तकज्ञाननिषेध्यत्वेपि स्वरूपतस्तद्गतचिदंशमादाय तत्कर्तृत्वोपपत्तेः। एवमेव "तदात्मानं स्वयमकुरुत" इत्यादावपि। भवन्मते ब्रह्मात्मकस्योपासकस्योपासना कर्मत्वाङ्गीकाराच्च। छेदनस्य छेत्तुश्च छेद्यान्तर्गतत्वासंभवशंका तु निवर्तक-ज्ञानस्य तादृशविलक्षणस्वभावाङ्गीकारान्न युक्ता। पदार्थशक्तिभेदस्य अमेयत्वात्। अत एव लोकेपि दहनः स्वस्वाश्रयनाशको दृश्यते" इत्यादि—तदपि न साधु। भवन्मते ज्ञातृत्वमन्तःकरणस्येति प्रसिद्धम्। (५-पु) भवतैव "कर्तृत्वादिरन्तःकरणस्यैव धर्मः" इत्युक्तम्। तद्विरोधेनात्र, "स्वरूपतस्तद्गतचिदंशमादाय तत्कर्तृत्वोपपत्तेः" इत्युच्यते व्याहतभाषणरसिकाग्र्येण भवता। किञ्च—तत्कर्तृत्वं

किमध्यस्तं सत्यं वेति विकल्पे निवर्तकान्तरापेक्षयाऽनवस्थाऽपसिद्धान्तादिना दूषणे निरुत्तरेणैव भवता भाव्यम्। जडाजडांशसंभिन्नोऽहमर्थ इति च विचित्रमिदमसंभवीति च स्पष्टम्। अहमर्थैकदेशचिदंशस्य निषेधविषयत्वानभ्युपगमेन मुक्तावप्यहमर्थानुवृत्तिरङ्गीकृतेत्यपसिद्धान्तश्च। "तदात्मानं स्वयमकुरुते"त्यादौ रूपभेदेन कर्तृकर्मभावः एकस्यैव न विरुद्ध्यते। प्रकृते तु विरोधो दुष्परिहर एव। नहि सामान्यतः कर्तृत्वकर्मत्वे एकस्य विरुद्ध्येते इत्युच्यते। अपितु विशेषतः। निवर्तकज्ञानाश्रयत्वरूपकर्तृत्व-निवृत्तिकर्मत्वयोरेव हि प्रकृते विरोध इत्युच्यते। 'तदात्मान'मित्यादौ न निषेधः प्रतिपिपादयिषितः। येन विरोधशंकोदियात्। अत एवास्मन्मते जीवस्योपासनाकर्तृत्वकर्मत्वे न विरुद्धे। नच निवर्तकज्ञानस्य विलक्षणशक्तियोगोऽङ्गीक्रियते। तेन च प्रकृतकर्मकर्तृभावो न विरुद्ध्यत इति वाच्यम्। तथासति लोकदृष्टमृद्घटविलक्षणतया शक्तिविशेषस्य प्रामाणिकतया जगद्ब्रह्मणोरपि परिणाम्युपादानोपादेयभावः ब्रह्मणोऽभिन्ननिमित्तोपादानत्वमित्यादीनामपि यथाप्रमाणमङ्गीकारापत्तेः। नहि भवन्मते ब्रह्मणो निर्विकारस्याभिन्ननिमित्तोपादानत्वं परिणाम्युपादानत्वं चाङ्गीक्रियेते, येनेष्टापत्तिः सुवचा। प्रतिपन्नोपाधौ निषेधविषयत्वरूपभवदभिमतमिथ्यात्वमनित्यस्य जगतोऽप्रामाणिकमिति सत्यत्वमेव च प्रामाणिकमिति च ज्ञानबाध्यत्वं दुर्वचमिति भवन्मतदौर्बल्य विवेकिभिर्विज्ञेयम्। अग्निदृष्टान्तोपि दुर्घट इति पूर्वमेवोक्तम्। तत्र स्वनाशकत्वाभावात्। एतेन कतकादिदृष्टान्तोपि निरस्तः॥

यदुक्तमत्र (१०६-पु) "त्वन्मतेपि मनोवृत्तिमयेन ह्युपासनेन तत्स्वरूपं, विशिष्टश्चोपासिता निवर्तनीय इत्युपगम्यत एव। भगवत्संकल्पस्य तत्सहकारित्वमात्रमेव स्वीकरणीयं त्वया। न साक्षात्

हेतुत्वम्। "भिद्यते हृदयग्रन्थिः" इत्यादिविरोधापत्तेः" इत्यादि। तन्न—उपासनाकर्तुर्जीवस्य उपासनायाश्च निवर्तनीयत्वानभ्युपगमात्। कर्मण एव निवर्तनीयता, तेन च शरीरादिनिवृत्तिः। नहि कर्मादेरुपासकता। मनआदेस्तत्रोपासनाया सहकारित्वमेव। न तूपासनाकर्तृत्वम्। नैवं त्वन्मते वक्तुं शक्यते। अन्तःकरणस्यैव त्वन्मते ज्ञातृत्वात् चैतन्ये तदभावेन निवर्तकज्ञानस्यैवाप्रसिद्धेः। उपासनाया अपि अस्मन्मते न निवर्तनीयता। धर्मभूतज्ञानस्य नित्यत्वात्। तस्य ज्ञानस्योपासनात्वावस्था तु मुक्तौ निवर्तत इत्येव तत्त्वम्। भगवत्सङ्कल्पस्यैव उपासनया मोक्षे जननीये द्वारत्वम्। नतु सहकारित्वम्। "धातुः प्रसादात्" इत्यादिप्रामाण्यात्। व्यापारेण व्यापारिणोऽनन्यथासिद्धेः। "भिद्यते हृदयग्रन्थि"रित्यादीनां न विरोध इति पूर्वमुपपादितमेव॥

यदुक्तं (१०७-पु) स्वाज्ञानविरोध्युपहितस्यात्मरूपसुखस्यैव पुमर्थत्वात् न ज्ञानार्थप्रवृत्त्यनुपपत्तिशंकापि। लौकिकमपि सुखमात्म रूपमेव विषयसंयुक्तमनोवृत्तेस्तद्व्यञ्जकमात्रत्वात्" इत्यादिकम्। तदसाधु। निवर्तकज्ञानाय यस्य प्रवृत्तिः, स तावन्नश्यति, आत्मरूपसुखं कस्य पुमर्थः। नहि केवलात्मरूपसुखं निवर्तकज्ञानाय प्रवर्तते। ततश्च ज्ञानार्थप्रवृत्तेरेवानुपपत्त्या निवर्तकाभावेन अज्ञाननिरसनासंभवात् पुरुषार्थस्यैवाप्रसक्तेर्भवदुक्तमसङ्गतम्। वैषयिकं नश्वर सुखमात्मरूपमिति तस्य च मनोवृत्तिरभिव्यञ्जिकेति च सर्वात्मनाऽसङ्गतम्। स्वयंप्रकाशाभिव्यञ्जकत्वं जडाया वृत्तेर्न संभवतीति पूर्वमुक्तमेव॥

यदपि चात्रैव (१०७-पु) "यद्वा अनावृताऽनवच्छिन्नानन्दप्रकाशात्मन एव पुरुषार्थत्वमुच्यते। तदुक्तं, "तस्मादविद्यास्तमयो नित्यानन्दप्रतीतितः। निश्शेषदुःखोच्छेदाच्च पुरुषार्थः परो मतः॥"

इति। अहमर्थो हि चिज्जडांशद्वयोपेतः। तत्र जडांशस्य मुक्तौ ज्ञानान्नाशेपि चिदंशस्य मुक्तिकालान्वयिनो विनाशाभावात् तं प्रति मोक्षस्य पुमर्थत्वं संभवत्येव। यादृशशरीरविशिष्टस्य पुरुषार्थे प्रवृत्तिः, तस्यैव जीवन्मुक्तस्य मुक्त्यन्वयसंभवात् न स्वनाशापत्तिः। परमते तु लोकान्तरप्राप्तेरेव मुक्तित्वेन यादृशविशेषणविशिष्टस्य प्रवृत्तिस्तादृश-शरीरादिरूपविशेषणविरहितस्यैव पुरुषस्य मुक्त्यन्वयात् स्वनाशापत्तिस्तन्मत एव" इत्यादि। तन्नितरामसङ्गतम्। तथाहि—अनावृतानवच्छिन्ना-नन्दप्रकाशात्मा पुरुषार्थ इत्युक्तम्। तत्रोदाहृतश्लोके, निश्शेषदुःखोच्छेदात् नित्यानन्दप्रतीतितः अविद्यास्तमय एव परः पुरुषार्थ इति अविद्याविनाशस्यैव पुरुषार्थत्वं स्पष्टं प्रतिपाद्यत इति कथमिदं घटते। अपिच "नित्यानन्दप्रतीतितः" इत्यत्र नित्यानन्दरूपप्रतीतित इति वा नित्यानन्दस्य प्रतीतित इति वा विवक्षितम्?। आद्ये—तादृश-प्रतीतेस्सार्वदिकत्वेन अविद्यास्तमयस्य पुरुषार्थत्वे तस्य हेतुत्वायोगः। द्वितीये—प्रतीतिविषयत्वेन जडत्वाद्यापत्तिः। किञ्च—चिज्जडांशद्वय-स्याहमर्थस्य ज्ञानाय प्रवृत्तिः, मुक्तावहमर्थैकदेशस्य नाशः, एकदेशस्य सत्त्वं, मुक्त्यन्वयश्चेत्येतदुपहास्यम्। "न त्वेवाहं जातु नास"मित्यादौ अहमर्थस्योत्तरावधिशून्यत्वस्यापि कथनात्तन्नाशायोगात्। न केवल-चितोऽहमर्थत्व त्वन्मते। ज्ञातृत्वं च न। अध्यस्त तु तत्कर्तृत्वं पूर्वमेव दूषितम्। 'जीवन्मुक्त्यन्वयः विशिष्टस्यैव सन्मते, नतु परमते' इत्यादिकमपि न सङ्गतम्। जीवन्मुक्तेः परमतत्वाभावात्। जीवन्मुक्तिश्च पूर्वभागे निराकृतैव सप्रमाणम्। अस्मन्मते चोपासना-कर्तुर्जीवस्य मुक्तौ नाशाभावान्न दोष इति तु पूर्वमुपपादितमेव। किञ्च— "जडांशस्य मुक्तौ ज्ञानान्नाशेपि चिदंशस्य मुक्तिकालान्वयिनो विनाशाभावात् तं प्रति मोक्षस्य पुमर्थत्वम्" इतीदं वाक्यमसङ्गतार्थमेव भवन्मते। चितोंशत्वायोगात्, मुक्तौ कालाभावात्, तं प्रति मोक्षस्येति

द्वितीयाऽसंभावाच्च। नहि मुक्तौ भवद्भिः पदार्थद्वयमङ्गीक्रियते, येन तं प्रति मोक्षस्येति युज्येत॥

यदपि चात्रैव (१०७-पु) "वस्तुतस्तु" इत्यादिना निवर्तकज्ञानस्य सर्वद्वैतनाशजनकत्वरूप न विरोधित्वम्। अपितु द्वैताधिकरणकाल पूर्वत्वानधिकरणक्षणवृत्तित्वरूपमेव तत्" इत्यादिकमुक्तम्। तदिद चतुष्षष्टितम( ६४ )पुटस्थविषयविमर्शावसरे एव विमृष्टम्। द्वैताधिकरणकालपूर्वत्वानधिकरणक्षणः परममुक्तिपूर्वक्षणः, तद्वर्तित्वं तत्कालोत्पन्नस्य बुद्बुदादेरप्यस्तीति तस्यापि द्वैतविरोधित्वमनिवार्यमेव। किञ्च—द्वैतविनाशकत्वं चेन्नाङ्गीक्रियते निवर्तकज्ञानस्य, तदा द्वैतं सर्वं निवृत्तं वा? न वा?। पूर्वत्र तद्विनाशः कीदृश इति प्रश्नावतारोऽनिवार्यः। उत्तरत्राऽनिर्मोक्षप्रसङ्गः। एतेन —'या यद्विषयकप्रमा, सा स्वसमानविषयकाज्ञानतत्प्रयुक्ताधिकरणकालपूर्वत्वानधिकरणक्षणवृत्तिरिति व्याप्तिशिक्षणमपि निरस्तम्। एवं च निर्विशेषात्मज्ञानस्य स्वरूपतो विषयादितश्च दुर्निरूपत्वात् न तस्याज्ञानादिनिवर्तकत्व संभव इति सिद्धम्॥

यदपि चेदमुच्यते (१०७-१०८-पु) "श्रुत्यादिभिर्बन्धस्य बाधितत्वात् न पारमार्थिकत्वम्। तेन ज्ञाननिवर्त्यत्वमज्ञानादिबन्धस्योपपन्नमेव। बन्धो मिथ्या दृश्यत्वात् शुक्तिरजततादात्म्यवत् इति मिथ्यात्वं बन्धस्य सिद्धमेव। भ्रममात्रविषयत्वं, प्रमित्यविषयत्वं वा सदसद्भ्यामनिर्वचनीयत्वं वा मिथ्यात्वम्। मिथ्यात्वेपि लौकिकवैदिकव्यवहारविरोधो नास्ति। मिथ्याभूततादृग्व्यवहारस्य मिथ्यावस्तुभिरेवोपपन्नत्वात्।" इत्यादि— तदपि न जाघटीति। श्रुत्यादिभिर्बन्धस्याबाधितत्वात्। नहि कुत्रापि श्रुतौ बन्धो मिथ्येति श्रूयते। नच ज्ञाननिवर्त्यत्वोक्त्यैव मिथ्यात्वमुक्तमेवेति वाच्यम्।

उपासनाया एव बन्धनिवर्तकत्वोक्तेः। उपपादित चैतत्पुरस्तादेव। बन्धो मिथ्या दृश्यत्वादिति तु अप्रयोजकत्वसाध्याप्रसिद्ध्यदिभिर्नार्थिसाधकम्। शुक्तिरजतस्थले मिथ्यात्वं न प्रसिद्धम्। तत्रानिर्वचनीयरजतोत्पत्तिमन्तरेव भेदाग्रहादिना भ्रमोपपत्तेः। अत एव शुक्तिरजततादात्म्यरूपदृष्टान्ताप्रसिद्धिरपि। मिथ्यात्वपरिष्कारोपि दुस्स्थ इत्यादिकं शतदूषणीपरमार्थभूषणादौ स्पष्टमुपपादितं तत्रैवानुसन्धेयम्। लौकिकवैदिकव्यवहारस्य मिथ्यात्वासिद्धेः व्यवहारविषयवस्तुमिथ्यात्व दुस्साधमेव। इद तु भवदुक्तमनुमानं मिथ्याभूतम्। बन्धमिथ्यात्वस्योक्तरीत्या बाधितत्वात्। नच त्वन्मते बन्धनिवृत्तिरूपमुक्तेरुपासनासाध्यत्वेऽनित्यत्वप्रसंग इति वाच्यम्। कर्मनिवृत्तिरूपमोक्षस्य सादित्वेपि उत्तरावधिशून्यत्वरूपनित्यत्वस्यैव विवक्षितत्वेनादोषात्॥

यदिदमाक्षिप्यते (१०८-पु) "अपि च सत्यस्य ज्ञाननिवर्त्यत्वं नास्तीति वादिनां उपासनाप्रसन्नभगवत्प्रसादनिवर्त्यत्वं कथं युक्तं स्यात्" इत्यादिना—तदप्ययुक्तम्। ज्ञानमात्रनिवर्त्यत्वस्यैवानभ्युपगमात्। उपासना ज्ञानविशेष एव हि। भवदभिमतवाक्यजन्यनिर्विशेषज्ञानस्यैव सत्यबन्धनिवर्तकत्वं नास्तीति प्रकृतविवक्षितम्। अतो भगवत्प्रसादस्यापि ज्ञानविशेषरूपस्य यथाप्रमाणं बन्धनिवर्तकत्वे न कापि क्षतिः। अत एव गरुडप्रसादनिवर्त्यत्व विषस्योपपन्नम्। नच तत्र विषं मिथ्येति वाच्यम्। प्रत्यक्षबाधितत्वात्। अपि च तत्त्वज्ञानविशेषादेव मोक्षप्राप्तेः प्रमाणप्रमितत्वेन जीवपरस्वरूपैक्यज्ञानं न मोक्षसाधनम्। अतत्त्वविषयत्वात्। नहि स्वरूपैक्यं तत्त्वम्। तत्त्वमसीत्यादेर्विशिष्टैक्यपरत्वमेवेति तु पूर्वमेवोपपादितम्। "उत्तमः पुरुषस्त्वन्यः" "पृथगात्मानं प्रेरितारं च मत्वा" इत्यादौ भेदज्ञानस्यैव मोक्षहेतुत्वं प्रतिपाद्यते। "आत्मेत्येवोपासीत" "आत्मेत्येव

तु गृह्णीयात्" इत्यादौ शरीरशरीरिभावनिबन्धनात्मत्वमेव विवक्षितम्। नतु स्वरूपैक्यम्। तथासति तत्त्वमसीतिवत् "सर्वं खल्विदं ब्रह्म" इत्यादिस्थले चेतनाचेतनसर्वसामानाधिकरण्यप्रयोगेनाचेतनस्वरूपैक्यस्याप्यापत्तिर्दुर्वारा स्यात्। स्वरूपैक्यसामानाधिकरण्यं बाधार्थसामानाधिकरण्यमिति द्वैविध्यकल्पनं तु 'सर्वं खल्विदं ब्रह्मे'त्येकत्र विरुद्धत्वात् त्याज्यमेवेति पूर्वमुपपादितम्॥

यदत्रोक्तं (१०८-पु) "ऐक्यज्ञानस्य सत्यविषयकत्वेन सत्यत्वात् मोक्षजनकत्व भवेत्। नतु भेदज्ञानस्य। तस्य मिथ्यात्वस्य प्राक् प्रपञ्चितत्वात्। स्वरूपत ऐक्यज्ञानस्य मिथ्यात्वमिष्टमेव।" इति। तन्न—भवतैव (५९-पु) ज्ञानस्य बन्धनिवर्तकत्वं न विषय विशेषाधीनम्। अपि तु कारणविशेषनिबन्धनस्वगतविशेषाधीनमेवेति उक्तमत्र प्रतिक्षिप्यते सत्यविषयकत्वेन सत्यत्वान्मोक्षजनकत्व" मिति वदता। किञ्च भेदस्य मिथ्यात्वमप्रामाणिकम्। प्रत्यक्षसिद्धत्वात्। श्रुतौ 'नेह नानास्ती'ति तु स्वतन्त्रवस्तुनिषेधपरमिति उपपादितं पुरस्तात्। "ऐक्यज्ञानस्य विषयाधीनसत्यत्व स्वरूपतो मिथ्यात्व मित्येतद्वञ्चनापरमेव। ज्ञानस्य स्वरूपतो मिथ्यात्वमभ्युपगच्छतो भवतस्सर्वमिथ्यात्ववादित्वमेवापतेत्। नचैक्यज्ञानमत्र वृत्तिरेव विवक्षितेति वाच्यम्। तर्हि तस्य ऐक्यरूपविषयाधीनसत्यत्वोक्तेर्बाधितत्वात्। न च—"उत्तमः पुरुषस्त्वन्यः" इत्यादिकं न जीवपरभेदप्रमाणम्। 'द्वाविमौ' इति पूर्वश्लोकोपात्तकार्यकारणरूपक्षराक्षरविलक्षणब्रह्मपरत्वादिति वाच्यम्। "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च" इत्यादौ पुरुषशब्दस्वारस्यात् बद्धमुक्तोभयवाचकत्वमेव क्षराक्षरशब्दयोरुचितमिति तदुत्तरश्लोके तादृशोभयविधजीववैलक्षण्यमेव ब्रह्मणः प्रतिपाद्यत इति वक्तुमुचितत्वात्। नहि घटपटादिकार्येषु मृत्पिण्ड

तन्त्वादिकारणेषु वा पुरुषशब्दो दृष्टप्रयोगोस्ति। “यस्मात् क्षरमतीतोहमक्षरादपि चोत्तमः। अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥” इत्युपरिश्लोके, घटादिभ्यो मृत्पिण्डादिभ्यश्चाहमुत्तम इत्यर्थवर्णनस्योपहास्यत्वात्। सजातीयविषये हि निर्धारणमुचितम्। अतश्चेतनवर्गवैलक्षण्यमेव ब्रह्मणोऽत्र प्रतिपिपादयिषितमिति जीवपरभेदप्रमाणमेवेदं प्रकरणमिति निष्प्रत्यूहम्॥

यदप्यत्रैव (१०८–पु) “पृथगात्मानमित्यादि भेदपरं न संभवति। भेदस्य प्रेर्यप्रेरकज्ञाने स्वत एव विषयीभावसंभवात् तत्परत्वे वैयर्थ्यात्। अज्ञातेश्वरतत्त्वस्यैवात्र ज्ञापनीयत्वात्” इति। तन्न—युष्मन्मते प्रेर्यप्रेरकभावः औपाधिकः, न स्वाभाविक इत्युच्यते। तन्निरासार्थमेव पृथक्पदसार्थक्यं सुवचम्। अत एव प्रेरितारमित्यबाधितार्थं भवेत्। अन्यथा प्रेरयितृतत्त्वस्यैव स्वरूपैक्यपरत्वे बाधितत्वात्। “प्रेरितारं मत्वा” इत्युपासनायाः प्रेर्यवर्गसापेक्षप्रेरयितृत्वविशिष्टविषयकत्वं च प्रतीयते। अतः स्वाभाविकप्रेर्यप्रेरयितृत्वरूपशरीरात्मभावनिबन्धनतादात्म्यानुसन्धानपरमेवेदं वाक्यमिति सिद्धम्। नचात्र पृथक्पदयोगे पञ्चमी स्यादिति वाच्यम्। “पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्” इति सूत्रार्थापरिज्ञानात्। “एभिर्योगे तृतीया स्यात् पञ्चमी द्वितीया च” इति हि तस्य सूत्रस्याऽर्थः। अतोऽत्र पृथग्योगे द्वितीया उपपद्यत एव। अपि चात्र द्वितीयान्तयोस्साक्षात् मत्वेत्यत्रान्वय इति न विभक्त्यन्तरप्रसक्तिः। “पृथगात्मानं प्रेरितारं च” इत्यत्र “प्रकृत्यादिभ्य आत्मानं पृथक् ज्ञात्वा तं च तात्पर्येण ध्यायन्” इत्याद्यर्थवर्णनं च प्रत्याख्येयम्। अध्याहारादिदोषप्रसङ्गात्। एवं च भेदस्य प्रामाणिकत्वेन बन्धसत्यत्वात् ज्ञानमात्रनिवर्त्यत्वं सर्वात्मना न संभवतीति सिद्धं भवति॥

यदत्र (१०९-पु) अनादिभावरूपस्याज्ञानादिबन्धस्य निवृत्तिर्न संभवतीति प्रथममाशंक्य, अनादेरपि भ्रमसंस्कारस्य निवृत्तिदर्शनेपि तत्र व्यक्त्यनादित्वाभावात् व्यभिचाराभावेपि प्रागभावे व्यभिचारमुक्त्वा, तत्र भावत्वाभावमाशक्य, "प्रागभावोऽस्तीति स्वरूपतस्सद्भावत्वस्य तत्र विद्यमानत्वात्। सत्तावत्त्वरूप भावत्वमज्ञानादिबन्धेपि नाङ्गीक्रियते" इत्याद्युक्तम्। तत्सर्वं न समीचीनम्। अनादेर्भावरूपस्य वस्तुनः नाशो नास्तीत्युक्तौ प्रागभावे व्यभिचारो वक्तुं न शक्यते। तस्यावस्तुत्वात्। वस्त्ववस्थाविशेषरूपत्वात्। मृत्पिण्डत्वावस्था हि घटस्य प्रागभावः। न ह्यवस्था अवस्थावद्द्रव्यं भवितुमलम्। अपिच अभावसाधारणं चेत् भावत्वमङ्गीक्रियते, तदा भावरूपाज्ञानसाधनवैयर्थ्यं चापतेत्। त्वदुक्तरीत्या प्रागभावस्येव ज्ञानाभावस्यापि भावत्वसंभवेन पारिभाषिकभावाज्ञानकल्पनाया व्यर्थत्वात्। वस्तुतस्तु भावत्वे द्वैविध्यमप्रामाणिकमेव। एतेन—"अनादेरपि प्रागभावस्य विरोधि सामग्र्यवैयर्थ्याय यथा विनाशोऽभ्युपगतः तथैव प्रमाणव्यापारावैयर्थ्याय अनादेरप्यज्ञानादिबन्धस्य विनाशोऽङ्गीकर्तव्य एव" इत्याद्युक्तं प्रत्युक्तम्। नहि वयं अनादिकर्मादिबन्धो न निवर्तेत इति वदामः। निर्विशेषवादिभिः भवद्भिर्न वक्तुं शक्यत इत्येव हि वदामः। निवर्तकज्ञानस्य कथं केन निवृत्तिः?। निवर्तकज्ञानतन्निवर्तनीयाज्ञानादिबन्धनिवृत्तेर्वा किंरूपतेत्यादीनामसमाधेयत्वात्। बन्धनाशस्याधिष्ठानब्रह्मात्मत्वं वक्तुं न शक्यत इति पूर्वमुपपादितम्। 'ज्ञानावस्थाया ज्ञातस्यात्मनः' इत्यादिभवद्वचनमत्र भवदीयसिद्धान्तविरुद्धम्। ज्ञानविषयत्वस्यात्मनि भवन्मते विरुद्धत्वात्। एतद्विषये अष्टपञ्चाशत्तम(५८)पुटस्थविषयविमर्शसमये कृतो विस्तरोऽत्रावगन्तव्यः। ब्रह्मज्ञानस्य ब्रह्माभिन्नत्वमित्यप्यसङ्गतम्। तथासति स्वरूपज्ञानस्यापि निवर्तकत्वापत्तेः। ब्रह्मणो वा सविशेषत्वापत्तेः। "अन्तःकरणवृत्त्यभिव्यक्तस्य ज्ञानस्य निवर्तकत्व"

मिति तु उपहास्यम्। नित्यस्वप्रकाशस्य ज्ञानस्य जडाभिव्यक्तत्वायोगात्। एतदपि पूर्वं निपुणमुपपादितमेव॥

यच्चोक्तं (१०९-पु) "वस्तुतस्तु नित्यमुक्तमेव ब्रह्म। तदभिन्नो जीवोपि नित्यमुक्त एव। अज्ञानादिबन्धस्तु नासीदस्ति भविष्यति" इति। तदेतत् चतुर्थपुटे "निर्गुणं ब्रह्म परमार्थतत्त्वं, तदेवाविद्यया संसरति। विद्यया मुक्तिमुपैति।" इति भवदुक्तचैव प्रत्याख्यातं वेदितव्यम्। सर्वशास्त्रवैयर्थ्यापत्तिश्च। कालत्रयेपि बन्धो नास्तीति च प्रत्यक्षापलापः॥

यदत्रोदाहृतम्—

"प्रपञ्चो यदि विद्येत निवर्तेत कथञ्चन।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥
बन्धो मोक्ष इति व्याख्या गुणतो मे न वस्तुतः।
गुणस्य मायामूलत्वात् न मे बन्धो न मोक्षणम्॥" इति—

तदिदं—

सत्यं जगत् प्राकृतं च नित्यमस्ति प्रवाहतः।
तच्छरीरः परश्चेति विशिष्टाद्वैतसत्यता॥
जीवस्य कर्माविद्यादिबन्धसत्यत्वतो हरेः।
भक्तिप्रसन्नान्मुक्तिस्तन्निवृत्त्या संभवेद्ध्रुवम्॥ इति निरस्तम्॥

वृत्त्यवच्छिन्नचैतन्यं विषये चाविशेषतः।
शुद्धचैतन्यतोल्यान्न स्यादविद्यानिवर्तकम्॥

तथा नानाविकल्पेषु दोषोन्मेषात् दुरुद्धरात्।
अविद्याया निवृत्तिश्च नोपपन्नेत्युदीरितम्॥

॥ इति षष्ठः परिच्छेदः॥

## ।। सप्तमः परिच्छेदः —परिशिष्टविषयः ।। (७)

१. अद्वैत्यज्ञानविषयाः शिष्टा वादा विशेषतः।
सप्तमेऽत्र परिच्छेदे निरस्यन्ते सयुक्तिकम्।।

इतःपर प्रायेण आग्रन्थसमाप्तेः दूषणप्रायाणि वाक्यानि तथैव शब्दतोऽनूद्य प्रतिवदामः। तत्प्रयुक्तदूषणानि तत्रैव लगन्तीति च प्रदर्शयामः ।।

यदत्र (११०-पु) " अद्वैतिसिद्धान्तरहस्यमिदमविज्ञायाद्वैतवेदान्तिमते दूषणोद्भावनं कुतार्किकाणां परं शोभते। आश्रयानुपपत्त्यादिभिर्भावाज्ञानवादे दूषणोद्भावनस्याप्यज्ञानविलसितत्वात्। अघटितघटनापटीयस्या मायायां कृतानि चोद्यानि मायात्वमेव तस्याः द्रढयन्ति। अतोऽनुकूलमेव चोद्यमिदं परोद्भावितमद्वैतिनाम्। मायावाददूषणसंरम्भस्यैव मायाकार्यत्वात्। अनादिमायामोमुह्यमानतादशाया विविधवैषयिकसुखभोगतत्साधनसत्यतामातिष्ठमानानां परेषां स्वाज्ञानतत्त्वाज्ञानं युक्तमेव। नहि मदिरामदोन्मत्ततादशाया मदिरापायिनां मदिरातत्त्वज्ञानं संभवत् दृष्टम्। नखलु भ्रान्तिकाले तन्निदानदोषज्ञानं संभवति" इत्यादिकम्। अत्र वदामः। सर्वमिथ्यात्ववादनिरासकाद्वैतमतप्रवर्तकान्प्रति सर्वमिथ्यात्ववादिनः, "अस्मन्मतरहस्यमविज्ञाय वृथादूषणान्यारोपयन्ति इमे भावाज्ञानरसिकाः" इति चेद्वदेयुः, तदा भवद्भिर्निरुत्तरैरेव भाव्यम्। यदि वेदविरुद्धत्वात् सर्वमिथ्यात्ववादो निरस्यत इत्युच्यते, तत एव हेतोः अद्वैतमतमस्माभिर्निरस्यत इत्येव तत्त्वम्। अत एव पाद्मपुराणोक्तमनुसृत्य प्रच्छन्नबौद्धाः इति तत्र तत्राचार्यसार्वभौमा व्यवहरन्ति। यदि लोकदृष्टान्तमवलम्ब्याद्वैतमतं वर्ण्यते, तदा लोकव्यवहाराविरोधेन वर्ण्यताम्। तदेव न सभवतीति आश्रयानुपपत्त्यादिभिर्दूषितम्।

श्रुतिप्रामाण्याद्वा तत्स्थापनीयम्। तदपि न शक्यमित्येतावता प्रतिबोधितम्। उभयथापि दुस्स्थमिदमद्वैतमतमिति श्रीभाष्यकारादिभिर्लोकानुजिघृक्षया यथावस्थितश्रुत्यर्थाभिवर्णने क्रियमाणे, "अद्वैतमत न जानन्ति ते, अनादिमायामोमुह्यमानाः, सुरापायिन इव तत्त्वाज्ञानिनः, इत्यादिदूषणं वा स्वमतस्थापनप्रकारः? । विषयविवेकमात्रेऽविश्रम्य निर्लज्जं निर्भीकमेवं लेखनेन तवैवाज्ञानान्धता सुप्रतिष्ठिता भवति। अपिच किमद्वैतमतप्रवर्तकाः अनादिमायामोमुह्यमाना वा न वा?। आद्ये—तत्प्रवर्तितमद्वैतमतमिदमप्रामाणिकमिति फलति। नहि मदिरामदोन्मत्तभाषणं प्रमाणमवयन्ति सन्तः। अन्त्ये—मतप्रवर्तनमेवानुपपन्नमिति स्थितम्। इदं चोपदेशानुपपत्तिवादे स्पष्टम्। किञ्च—मायाविषये परोद्भावितं चोद्यं भवन्मतानुकूलं चेत् किमिति इयान् संरभः क्रियते। किमर्थं वा परोद्भावितदूषणोद्धारप्रत्याशया वृथाप्रयासे ग्रन्थरचने प्रयत्यते त्वया।।

यदत्राभियुक्तोक्त्युदाहरणं—

"नीतिज्ञा नियतिज्ञा अपि भवन्ति शास्त्रज्ञाः।
ब्रह्मज्ञा अपि सुलभाः स्वाज्ञानज्ञानिनो विरलाः।।
तमसावृताश्चरन्तः सविधे दूरे च नावयन्त्यर्थान्।
अवयन्ति तु विस्पष्टं तदिति शिरस्यभिहते मूढाः।।" इति।।

तदेवं प्रत्युच्यते—

आर्येयं तेष्वनार्येषु नूनमर्थवती भवेत्।
सर्वज्ञेपि परब्रह्मण्यज्ञानं कल्पयन्ति ये।।
अज्ञानमोहनिबिडाः अकृतकवचसामनर्थमवयन्ति।
येऽमी नितरां मूढाः अभिहतशिरसोपि नावयन्त्यर्थान्।।-इति।।

यदपि चोक्तं—इहाबालगोपालं जाड्यमोहरूपेण सर्वानुभवसिद्धाया मायायां दुर्घटैकविधायिन्यामशक्यनिरूपणायामनुपपत्तेरलंकारत्वात्। अन्यथा तस्या मायात्वभङ्गापत्तेः। परं तु तत्परिहारोपायान्वेषणमेव विवेकिनामुचितम्। परिहृतये मायातत्त्वनिर्णयस्य संपाद्यत्वे च, लोके तन्निर्णयस्य इन्द्रजालादौ सर्वेषामशक्यनिरूपणत्वेन संप्रतिपन्नत्वात्" इत्यादिकम्। अत्रोच्यते। मायातत्त्वं न केनाप्यपह्नूयते। तेन च बन्धः, स च निवर्तनीयः, तदुपायान्वेषणं कार्यमेवेत्यादिकं सर्वमङ्गीक्रियत एव। का सा मायेति विचिकित्सायां, "मायां तु प्रकृतिं विद्यात्" इत्यादिप्रमाणैरेव मायातत्त्वनिर्णये जाते किमित्यप्रसिद्धानुपपन्नाप्रामाणिकभावाज्ञानरूपत्वकल्पनमित्येव क्षिपामः। आबालगोपालमनुभूयमानमज्ञानं तु तत्तत्कर्मानुगुणप्रकृतिसम्बन्धनिबन्धनज्ञानसंकोचरूपमेवेति यथाप्रमाणं सिद्ध्यति। किञ्च — आबालगोपालमनुभूयमानमज्ञानं न कोऽपि नास्तीति वदति। अपि तु परब्रह्मणः तन्नास्तीत्येव वदामः। श्रुतौ "यस्सर्वज्ञः सर्ववित्", "ज्ञाज्ञौ" इत्यादिना सर्वज्ञतया घुष्यमाणं परमात्मानमेवाज्ञं कल्पयन्तो भवन्तः कथं वैदिका भवितुमर्हन्ति इत्येव पृच्छामः। अज्ञत्वादेव सर्वज्ञत्वं परस्येति वादस्तु सर्वजनोपहास्य इति स्पष्टम्। इन्द्रजालदृष्टान्तोऽपि भवद्विपरीतमेव साधयेत्। तत्र हि ऐन्द्रजालिकः, तद्व्यापारः, तत्साधिका पिञ्छिका, द्रष्टारः इत्येवमादि सर्वमपि सत्यमेवेति पण्डितपामरनिर्विशेषसिद्धम्। अत्रविषये हर्षमिश्रकृतखण्डनोक्तं सर्वं खण्डितं परमार्थभूषणादाविति तत्रैवानुसन्धेयम्। "नहि दृष्टेऽनुपपन्नं नामे"ति न्याय भवन्तमपि प्रतिबोधयामः। अत एव ब्रह्मभिन्नं सर्वं मिथ्येति वादोऽनुपपन्न इति सिद्ध्यति॥

यदत्र (१११-पु) विद्यारण्यमुन्युक्त्युदाहरणं—

"प्रसरन्ति हि चोद्यानि जगद्वस्तुत्ववादिषु।
न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः॥
चोद्येऽपि यदि चोद्यं स्यात् त्वच्चोद्ये चोद्यते मया।
परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम्॥
स्वप्रकाशे कुतोऽविद्या तां विना कथमावृतिः।
इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ॥" इति।

तदित्थं प्रत्याख्यामः—

अबाधिताक्षादिमानैर्जगत्सत्यत्वसिद्धितः।
मायाया भावरूपाया एवासिद्धेर्हि चोद्यता॥
स्थाने मिथ्यावादिनो हि चोद्याद्बिभ्यति यत्स्वयम्।
नैवास्माकं चोद्यभीतिः प्रमाणपदवीजुषाम्॥
नैवाऽविद्या स्वप्रकाशे नच स्यादावृतिस्तया।
यद्यावृणोति तद्ब्रह्म स्वानुभूतिं ग्रसेत सा॥—इति॥

यश्चात्र (१११-पु) विचित्रो वादो दृश्यते—"यदि श्रीभाष्यकाराः श्रौतबोधेन मायायास्तुच्छीकरणार्थं दूषणान्युद्धाटयेयुस्तदा तस्यास्मदिष्टत्वेन ते प्रतिवादित्वान्निवर्तेरन्। स्वाभिमतप्रपञ्चसत्यतास्थापनाय हि पराभिमतप्रपञ्चमिथ्यात्वौपयिकमायास्वरूपं ते खण्डयितुमुद्युञ्जते। तच्चाज्ञानाश्रयत्वविषयत्वादिप्रयुक्तमिति परेषामेवात्मनोऽज्ञानाश्रयत्वं गमयति" इत्यादिः। सोऽयमभिनिवेशवशीकृतचेतसो भवत एव युज्यते। "अस्मदिष्टत्वेन, स्वाभिमत, पराभिमते"त्यादिभवदीयात्रत्यव्यवहारपर्यालोचने इदमत्यन्तस्फुटं भवति—यत्—स्वबुद्धिपरिकल्पितं किमपि मनसि निश्चित्य तदनुगुणतया प्रमाणवाक्यानि नेयानि। नतु प्रमाणवाक्यैः पूर्वापरप्रकरणपरामर्शपूर्वकं विमृष्टैस्सिद्धयन्

तत्त्वार्थोऽङ्गीकर्तव्य इति। इदमानन्दमयाधिकरणशाङ्करभाष्ये स्पष्टम्। इदमेवात्र तत्त्वम्—श्रुतिस्मृतीतिहासादिसर्वप्रमाणपरामर्शेन प्राचीनबोधायनादिकृतवृत्त्यादिग्रन्थानुसारेण च प्रमितं तत्त्वं प्रतिष्ठापयितुमेव तद्विरुद्धं स्वस्वाभिमततयैव निष्प्रमाणं कल्प्यमानं मतं प्रतिक्षिपन्ति श्रीभाष्यकाराः— इति। एवं स्थिते नैतच्चित्रं—परस्मिन्नेव सर्वज्ञे ब्रह्मणि अज्ञानं कल्पयन्तो यूयं भगवति श्रीभाष्यकारे तत्कल्पयितुं प्रवर्तध्वे —इति। अत एवेदं सत्यं वचः—"स्वाज्ञानं ये न जानन्ति तत्पश्यन्ति परत्र ते।" इति॥

यदत्र—"अत्राह साऽविद्या कस्येति। यस्य दृश्यते तस्यैव। कस्य दृश्यत इति। अत्रोच्यते—अविद्या कस्य दृश्यत इति प्रश्नो निरर्थकः। कथं?—दृश्यते चेदविद्या, तद्वन्तमपि पश्यसि।" इत्यादि शांकरभाष्योदाहरणम्— तदिदमेकमेवालं भवन्मतदौर्बल्यप्रकाशाय। विस्तरस्तु उपदेशानुपपत्तिवादेऽनुसन्धेयः। परमार्थभूषणे (६२७-पु) "अद्वैततत्त्वविज्ञश्चेत् नोपदेष्टा भवेदसौ। उपदेष्टु प्रवृत्तश्चेत् भ्रान्त एव भवेदसौ॥" इत्युक्तमिहानुसन्धेयम्॥

यच्चात्र—(१११-पु) "श्रीभाष्योद्भावितसप्तविधानुपपत्तिपरिहारः पूर्वाद्वैतिग्रन्थैरेव कृतः। परन्तु तत्र मतान्तरसाधारणतया विस्तृतत्वात् तत्परिहारप्रकारस्य बालसुखबोधाय एकत्र सङ्कलय्य प्रदर्शनार्थमेवात्र प्रवृत्ति" रिति स्वग्रन्थरचनप्रवृत्तिफलवर्णन शास्त्रिकृत—तत्र वदामः। परमार्थभूषणान्तैः श्रीविशिष्टाद्वैतसिद्धान्तप्रवर्तकास्मत्पूर्वाचार्यग्रन्थैरेव सप्तविधानुपपत्तिषु नैकाप्यनुपपत्तिरुद्धृता, उद्धर्तुमशक्या चेत्येतत्सुविशदमुपपादितमेव। तत्सारेणमेवात्र चिकीर्षितमस्माकमिति सन्तो विदांकुर्वन्त्विति प्रार्थये॥

काश्चिद्दोषान् परकृतावुद्धाट्यैव विरम्यते।<br>
ग्रन्थविस्तरभीत्यैव तत्र दोषक्षयान्न हि॥

यश्चात्र (११२-पु) उपसंहारः—"तस्मात् ब्रह्म जीवाभिन्नमेव। जीवाश्च तदभिन्ना एव। भेदस्तु तयोरविद्याविजृंभितः। आविद्यकाः कर्तृत्वभोक्तृत्वादयो जीव एव। सर्वज्ञत्वादयोपि परब्रह्मणि मायाकल्पिता एव। वेदान्तजन्यनिर्विकल्पकब्रह्मसाक्षात्कारादेव मुक्तिः। सविशेषज्ञानं तु तदुपयोगिज्ञानमात्रमेव। अयमेव श्रुतिस्मृतीतिहासपुराणानां तात्पर्यतः परिनिष्पन्नोऽर्थः। एवं च भावाज्ञानवादश्च श्रुत्यादिसिद्ध एव। सकलमुनिवरमूर्धन्यभगवद्वेदव्यासप्रणीतसूत्रकलापपौर्वापर्यपर्यालोचनयापि भावाज्ञानं प्रसिद्ध्यति" इति। सोऽय बाधितार्थ एव। "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा" "जगद्व्यापारवर्जम्", भोगमात्रसाम्यलिङ्गाच्च" इत्यादिश्रुतिसूत्रप्रमाणशतस्थापितत्वात् स्वाभाविकजीवब्रह्मभेदस्य, "कर्ता शास्त्रार्थवत्त्वात्" इत्याद्यनुसारेण जीवीयकर्तृत्वादीनामनाविद्यकत्वस्य प्रतिष्ठापितत्वात्, "स्वाभाविकी ज्ञानबलक्रिया चे"त्यादिप्रमाणैर्भगवति सर्वज्ञत्वादीनां स्वाभाविकत्वस्य सिद्धत्वात्, निर्विशेषस्यैवाप्रसिद्धेः, तथा तत्साक्षात्कारस्य वाक्यजन्यत्वासंभवात् न तादृशसाक्षात्कारात् मुक्तिरिति स्थापितत्वात्, सविशेषोपासनादेव परममुक्तिरिति, "आत्मेत्येवोपासीत", "आवृत्तिरसकृदुपदेशात्" इत्यादिप्रमाणैस्साधितत्वाच्चायमेवार्थः सकलश्रुतिस्मृतीतिहासपुराणसूत्राणां वाच्यतस्तात्पर्यतश्च परिनिष्पद्यते। अतो भावाज्ञानवादोऽयं श्रुत्यादिप्रमाणभावाज्ञानमूल एवेति तत्त्वम्॥

अविद्या भावरूपैवं परैः स्वमतिकल्पिता।
सर्वथाऽनुपपन्नेति स्थापिता युक्तिमानतः॥

॥इति सप्तमः परिच्छेदः॥

यदिदं—(११२-पु)

"सेयं यत्र समाश्रिता गुणमयी माया तिरोधायिका,
प्रत्यक्षाद्यखिलप्रमाणविदिताकारा विचारासहा।
तत्त्वज्ञानदिवाकरे समुदिते या लीयते मूलतो,
निर्धूतावधिबोधमोदसुभग तन्नौमि पूर्ण महः॥" इति।

तत्रैवमुच्यते—

यो मायां प्रकृतिं चितं च भगवानन्तर्नियम्याखिलं,
नित्यं विश्वशरीरको विसृजति व्यष्टिं समष्टिं तथा।
काले कुत्रचिदागते जगदिदं सर्वं क्षणात्संहरन्,
रक्षन्त तमिमं दयालुमनघं भक्त्या प्रपन्नोऽस्म्यहम्॥ इति॥

१. प्रत्यक्षबाधादनुमानदोषात् सर्वश्रुतीनामतिपीडनाच्च।
अज्ञानमूलो वितथः परेषा शुद्धस्वरूपाद्वयवाद एषः॥

२. प्रत्यक्षादिप्रमाणानामुपपत्त्या विशेषतः।
सर्वश्रुत्यैकरस्याच्च विशिष्टाद्वैतनिश्चयः॥

३. आश्रयानुपपत्त्यादिदोषैस्सप्तभिरेव तत्।
भावाज्ञान दूषितं, तत् न्यरूप्याचार्यवीक्षणात्॥

४. श्रीरङ्गरामानुजयोगिपादसेवात्तवेदान्तयुगीरहस्यः।
श्रीरङ्गनाथो निरमान्महद्भिः नियुक्त एतत्कृतिरत्नमेवम्॥

५. श्रीवासस्सूरिसूनुश्रीरङ्गनाथविनिर्मिते।
विशिष्टाद्वैतविजये पूर्णो भागोऽयमन्तिमः॥

इति श्रीरङ्गरामानुजयोगीन्द्रचरणारविन्दचञ्चरीकायमाण-
श्रीरङ्गनाथदासविरचितः विशिष्टाद्वैतविजयस्सम्पूर्णः॥

॥श्रीमते श्रीरङ्गरामानुजमहादेशिकाय नमः॥
॥श्रीमते निगमान्तमहागुरवे नमः॥
॥श्रीमते भगवते भाष्यकाराय नमः॥
॥श्रीरङ्गनाथपरब्रह्मणे नमः॥
॥इति शम्॥